महामण्डलग्रन्थावली सं० २ ।

# उपदेशपारिजातः ।

श्रीमहामण्डलीयशास्त्रप्रकाश
विभागतः प्रकाशितः ।

प्रथमावृत्तिः

श्रीकाशीधाम

कलेर्गताब्दाः ५०११





मूल्यमा[illegible]ः

# उपदेशपारिजातः ।



श्रीमहामण्डलीयशास्त्रप्रकाश-
विभागतः प्रकाशितः ।

प्रथमावृत्तिः ।

श्रीकाशीधाम ।

कलेर्गताब्दाः ५०११



मूल्यमाणकाष्टकम् ॥)

# उपदेशपारिजातः ।

## अनुक्रमणिका ।






This book is published by the Publishing Department of Sri Bharat Dharma Mahamandal Head Office, Benares City.

ॐ नमो भगवते वासुदेवाय ।

# प्रस्तावना ।

नन्वधुनापि स्मृतयस्तदनुगुणाः संग्रहग्रन्था अपि धर्म्मव्याख्यायाग्रन्थसमसि वर्त्मनि स्थूलालोका इव भूरिशो विद्यन्ते, तत् किमनेनोपदेशपारिजातनामकग्रन्थस्य प्रणयनेन तत्प्रचारणेनवेत्यलमेतदित्येवं प्रतिवादिनं बोधयितुं सिद्धान्तरूपा प्रस्तावनैषा प्रादुरस्ति ।

निरन्तरं परावर्त्तमानमनुसृत्य कालं बुद्धिरपि मानवानां तत्तद्भावेनानुवासिता स्यात् । वर्षेऽस्मिन् भारते कर्म्मभूमावित्यमेवैकदा कालो विललास, यत्र श्रुतिजातं सूत्रव्रातश्च कार्य्यविधौ सुगम उपाय इति विज्ञामवः कृतकृत्यतामापुः ।

तदेवं व्यतीते काले लोके लेशतो बुद्धिदौर्बल्यात् विभज्य वेदमेकं चतुर्धा शिक्षासौकर्यमापादयन् धर्म्मसूत्राणि भाष्येण समयोजयंश्च महर्षयः । तदनु इत्यंकारः काल आविरासीत्, यदा गद्येन पद्येन च वाङ्मयेन संहिताः पुराणादीन्यपि शास्त्राणि प्रयोजनसाधनान्यासन् । इत्थमपराहतशक्तेः कालस्य महिम्ना क्रमशो मानवानां बुद्धिः शनैः शनैः क्षयप्रवणा समुन्नतमाध्यात्मिकपथमारोढुमशक्नुवाना च केवलमाधिभौतिकभावं बहुमन्यमाना तृप्यति, न तु त्रिभावात्मकं श्रुतेर्गभीरमर्थमधिकर्त्तुं प्रभवति । सुतरामिदानीं केवलं धर्म्मसूत्रैर्धर्म्म दर्शनार्थं वा विज्ञातुं सुदूरं पराहता विषीदति ।

आर्षभाष्यं चाधुना प्रायो विलुप्तं, ततश्च स्मृतिवचनेषु च संशयकूपे निपतन्तो मर्त्त्याः केवलं हेतुतन्तुमवलम्ब्य समुत्थातुमीहन्ते । बलीयसा कालेन तु दलितकलेवराः श्रुतयः स्मृतयश्च मिथो विरुन्धन्ति । तत् प्रशमयितुमनासाद्यानुकूलश्रुतिं जिज्ञासवो यथेच्छमुत्पथं प्रतिपद्यन्ते । वेदार्थाननुसरतां पुराणानां तन्त्राणाञ्चार्थान् याथातथ्य-

द्वितीयाध्याये सनातनधर्मस्वरूपं धर्मप्रचारकस्य धर्माचार्यगणस्य चाधिकारः संक्षेपाद्वर्णितः । तृतीयेऽध्याये वेदानां वेदार्थोपनिबद्धशास्त्राणां च लक्षणं संक्षिप्य वर्णितं सांप्रतिकदेश-काल-पात्रानुरूपां युक्तिमपि प्रदर्श्य तत्तच्छास्त्राणां महत्त्वं प्रतिपादितं च । एतत्पाठकाः सामान्यतः सर्वशास्त्राणामेव स्वरूपमवगन्तुं शक्नुवन्ति। चतुर्थाध्याये धर्मवक्तॄणां धर्म्माचार्याणां च कस्मिन् कस्मिन् विषये सावहितत्वमपेक्षणीयं धर्म्मोपदेशकानां सर्वथा शुभमशुभं च, सदपि धर्मप्रवक्तॄणां कथंकारमधिकारनैपुण्यमित्यादि धर्म्मोपदेशरीतिर्वर्णिता। पंचमेऽध्याये सन्यासिनो गृहस्थाश्च धर्माचार्याः कस्मिन् कियद्वा वैचक्षण्यमाविष्कर्त्तुमर्हन्ति, कथंकारं वा व्यवहरन्तः कृतकृत्या भवेयुस्तदेव संक्षेपतो विवृतं । ग्रन्थेनानेन चेत् सनातनधर्मशिक्षायां साहाय्यं भवेत्, धर्म्माचार्या धर्म्मोपदेशकाः पौराणिकाः पण्डिताश्च लेशतोऽप्युपकारं लभेरंश्चेत्तर्हि ग्रन्थकृतां श्रमसाफल्यं स्यात् ।

पूज्यपादानां ग्रन्थकर्त्तॄणामनुज्ञया ग्रन्थस्यास्य स्वत्वमर्पितं काशीपुरीयश्रीविश्वनाथान्नपूर्णादानालय एवाधिकरोतु । ग्रन्थस्यास्य यावदर्जितं धनं अध्यापकानां धर्माचार्याणां धर्मोपदेशकानां च सच्छिक्षासाहाय्याय व्ययमेष्यतीति ।

श्रीकाशीधाम्नि
गुरुपूर्णिमायां
कलेर्गताब्दाः ५०११ ।

दयानन्दः ।



अवगन्तुमनीशा विद्वांसोऽपि विमुह्यन्ति । धर्म्माभ्यासे रीतयोऽपि सुगमग्रन्थाभावाद्विलुप्यन्ति । सुतरामधुना यथादेशं यथाकालं यथा-पात्रञ्चानुसृत्य ग्रन्थानां संग्रहं प्रणयनं च विना न नृणां श्रेयः सम्भवेत् ।

एतानन्यांश्च धर्म्मव्यतिकरान् प्रतिहन्तुं श्रीभारतधर्ममहामंडलस्य परिचालकाः साधव एवं निर्णीतवन्तो यदाश्रमधर्माणां सुस्थितये धर्म्मानुकूलस्त्रीशिक्षायै ब्राह्मणोपाध्यायानां धर्माचार्याणां गुरुगणानां धर्मोपदेशकानां तुर्य्याश्रमिणाञ्च सम्यक् धर्मशिक्षायै देवभाषया तदुप-योगिसुबोधं किमपि पुस्तकं विरचय्य प्रकाशयितुमिति । कियन्तश्च ग्रन्था अधुना रचिताः प्रकाशिताश्च क्रमशःप्रचारे समुद्दिष्टं कार्य्यं फलाय कल्पिष्यते । भगवता वासुदेवेन गीतोपनिषदि स्वयं गीतं, यत्—

"ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ "

सनातनस्त्वेष धर्मः सर्वं व्याप्नोति सर्व्वां शक्तिं दधाति सर्वञ्च श्रेयो वितरति परमात्मनो नातिरिच्यते, स चायं तत्साहप्यात् तन्नामिकश्च । पितुः पुत्रेणेव पृथिव्यामन्यधर्म्मैः साद्धं सनातनधर्मस्य-सम्बन्धः । परन्तु अधिकारभेदात् मतलक्ष्याचारसाधनयोग्यतानामपि भेदोऽवश्यम्भावी, किन्तु पितेव सनातनधर्मः सकलानेव धर्म्म-पथान् पोषयन् जयति । इदमौदार्यमार्य्यमहर्षीणां सर्वथा प्रेमास्पदं वस्तु । यावदेतदार्यजातयः पुनर्हृदयङ्गमं न करिष्यन्ति तावत्त-न्माहात्म्यं न पुनः प्रतिष्ठां लप्स्यते ।

अस्य ग्रन्थस्य प्रथमोऽध्यायः केवलं भगवत्प्रार्थनया प्रपूर्णः । यथा चार्यजातय इदानीन्तनं भावदारिद्र्यम् मुंचन्ति तदर्थमेवास्मिन् भगवत्सविधे प्रार्थना विहिता ।

श्रीशिवः शरणम् ।

# उपदेशपारिजात

---

## मङ्गलाचरणम् ।

---

प्रणमज्जनतापहारिणौ जगदुत्तरशक्तिधारिणौ ।
सततं शुभकारिणौ हरेश्चरणौ नः शरणं हि केवलम् ॥ १ ॥
अवितर्क्यतनुत्वनिर्णयेऽप्यथ संश्रितचित्तचारिणः ।
धृतसम्मदसच्चिदात्मनश्चरणौ सत्करुणौ हरेर्नुमः ॥ २ ॥
सर्वजीवहितैषित्वव्यापकत्वादिलक्षणः ।
जयतात्सार्वभौमोऽसौ धर्म्मः श्रीभगवानिव ॥ ३ ॥

---

## प्रार्थना ।

अभेदेऽप्यहमेवास्मि त्वद्विभूतिर्न मे भवान् ।
सच्चिदानन्द ! चित्तेश ! यतो वीचिः समुद्रजा ॥ १ ॥
त्वं सर्वज्ञः सर्वदर्शी करुणात्मन् ! जगद्गुरो ! ।
अल्पज्ञस्य च मे चित्ते दिव्यं ज्ञानं प्रकाशय ॥ २ ॥
विश्वमूर्ते ! कृपस्वैवं त्वदंशप्राणिषु प्रभो ! ।
यथा स्युः कुपथं हित्वा पराऽऽनन्दार्ज्जनोन्मुखाः ॥३॥
इदं विश्वं महादेव ! त्वत्तोऽजात्स्वकृतविग्रह ! ।
जायते लीयते चान्ते त्वय्येव जगदाश्रये ॥ ४ ॥
प्रलयान्ते रजोरूपिन् ! सर्वलोकपितामह ! ।
उत्पादयसि वैचित्र्यावहं सर्वं त्वमेव तत् ॥ ५ ॥

विष्णो ! त्वं सत्त्वमास्थाय सृष्टिलीलां विलक्षणाम् ।
रक्षस्यसिद्धघटनघटनायां पटीयसीम् ॥ ६ ॥
महारुद्र ! भवानेव विभाविततमोगुणः ।
अपारसुषमागारसृष्टिधारापहारकः ॥ ७ ॥
तापहारिन् ! त्वदीयानां हृदयाविनयं हर ।
स्वान्तासद्वासनानाशात्कुर्वंस्तांश्च सदुन्मुखान् ॥ ८ ॥
येनैते द्वेषमुत्सृज्य सङ्गता भ्रातृभावतः ।
भवेयुर्भवतोऽनन्तमहिम्नां कीर्तने रताः ॥ ९ ॥
कृपाकटाक्षनिक्षेपपूर्वकं जगतां पितः ! ।
असत्कर्मविपर्यस्तान् स्वाख्यपुत्रान्समुद्धर ॥ १० ॥
नोचेदितोऽपि सुबलः कदा कालः समेष्यति ।
पतितोद्धारकेत्याख्यासार्थक्याऽऽपादनाय ते ॥ ११ ॥
याऽऽर्य्यजातिर्जगद्गुर्वी जगद्विजयिनी पुरा ।
धर्म्मराज ! प्रमादेन जगद्भिक्षुकतां गता ॥ १२ ॥
इतोऽपि प्रबलोदण्डः क एषां करुणार्णव ! ।
इदानीमप्यसद्भोगविरतिर्यन्न जायते ॥ १३ ॥
जीवानान्तु गतिर्नित्यं निम्नगाऽस्ति निसर्गतः ।
पतितोद्धारकस्त्वञ्च स्मारयामि ततोऽभिधाम् ॥ १४ ॥
मोहनिद्रातमोव्याप्ते सदाऽऽर्य्यहृदये यथा ।
ज्ञानज्योतिर्विकाशः स्याज् ज्ञानमूर्ते ! तथा कुरु ॥१५॥
आध्यात्मिकं सार्वभौममेकदेशित्ववर्जितम् ।
सात्त्विकं ज्ञानमार्य्येषु ज्ञानात्मन् ! सुप्रकाशय ॥ १६ ॥
निजानाश्चिरभक्तानां भक्तचित्तैकसद्मग ! ।
हृत्कपाटमपावृत्य रम्यां मूर्तिं प्रदर्शय ॥ १७ ॥
येनैते त्वामविस्मृत्य हृषीकेश ! प्रबोधिताः ।
न भवेयुः स्वार्थपरा भूयोऽपीन्द्रियलोलुपाः ॥ १८ ॥

यज्ञेश्वर ! नरा यद्यप्याधुनिकाः समस्तराः ।
त्वद्रहस्यानभिज्ञाश्च प्रमादालस्यदोषतः ॥ १९ ॥
तथापि पूर्वजास्त्वेषां कर्म्मसद्मनि भारते ।
आसन्नेव हि तत्त्वज्ञा भक्तास्तव पुरोगताः ॥ २० ॥
विचार्य्यैतज्जगत्प्राण ! कृपयैषाम्मतिम्पुनः ।
कुरुष्व कर्म्मविज्ञानशक्तिसम्पद्विलक्षणाम् ॥ २१ ॥
तपोमूर्ते ! त्वत्प्रभावविस्मृत्या दुर्गता अपि ।
सन्तु त्वत्कृपयाऽकामव्रता द्वन्द्वसहिष्णवः ॥ २२ ॥
दानमूर्ते ! प्रकृत्या त्वत्सेवाऽऽसक्तानिमान् कदा ।
कर्ताऽसि कलिपापघ्न ! सत्त्वदानपरायणान् ॥ २३ ॥
महाकाल ! युगाधार ! सृष्टिस्थित्यन्तकारिणः ।
तवेच्छयाऽस्ति प्रत्येकयुगेऽन्ययुगसम्भवः ॥ २४ ॥
जगज्जनक ! विश्वात्मन् ! तस्मादभ्यर्थ्यतेऽधुना ।
भूयात्सत्त्वगुणोपेतः कालोऽयमपि दुस्तरः ॥ २५ ॥
स्युः कुपुत्राः परं मातः ! कुमाता न श्रुता क्वचित् ।
शाध्येतान् भारतक्षोणि ! यथा स्युस्तव सेवकाः ॥ २६ ॥
व्यवहाररताश्चापि प्रवृत्तिश्चानुगामिनः ।
'सत्येन लोका विजिता भवन्ती'तिमतस्थिताः ॥ २७ ॥
न च्युता मोक्षपदतो ये विप्रास्तेऽधुना प्रभो ! ।
विचलन्तोऽवलोक्यन्ते सत्यात्मन् ! किन्न रक्षसि ॥ २८ ॥
इतोऽपि पश्य भगवन् ! तेजोरूप ! विपद्दशाम् ।
निस्तेजस्काः शौर्य्यवीर्य्यहीना जाता जनाः समे ॥ २९ ॥
तस्माद्धैर्य्यम्मनःप्राणेन्द्रियशक्तिनियामकम् ।
वितीर्य्याशु पुनः क्षात्रन्तेजो वर्द्धय वर्द्धय ॥ ३० ॥
अयि मातर्महालक्ष्मि ! भूयः संयोजय स्वकान् ।
अपहारितसर्वस्वान् बालानार्य्यजनान् धनैः ॥ ३१ ॥

प्रचीयताञ्च वाणिज्यं सर्ववृत्तिनिबन्धनम् ।
येनैतद् भारतं भूयो लीलाभूमिर्भवेत्तव ॥ ३२ ॥
साक्षाद् यातो विश्वकर्मन् ! शिल्पविद्यात्वधोगतिम् ।
करार्पणेन भगवन् ! निजां स्मृत्वा समुद्धर ॥ ३३ ॥
स्वस्वधर्म्माधिकारानुसारं सर्वनियामकः ।
धर्म्मरूप ! भवानेव सर्वेभ्यश्च फलप्रदः ॥ ३४ ॥
सर्वधर्म्माश्रय ! विभो ! नृणां सङ्कुचिते हृदि ।
त्वत्सार्वभौमभावस्य प्रादुर्भावः कदा भवेत् ॥ ३५ ॥
योगीश्वर ! विभो ! कृष्ण ! लीलयैतद्भवान् सदा ।
सृजत्यवत्यत्ति विश्वं योगेन निजकौशलात् ॥ ३६ ॥
अतोऽधुना त्वदुक्तस्य गीतोपनिषदि प्रभो ! ।
कर्मयोगस्य विज्ञानप्रसारोऽस्तु महीतले ॥ ३७ ॥

शक्तिस्तेविलसत्यकुण्ठितगति-
यां सर्वकार्य्येषु तत्-
साहाय्याश्रयतो व्यधिष्महि वयं
यत्नै महान्तम्मखम् ।
तं सम्पूर्य्य सुमङ्गलेन कृतिनो
योज्याः प्रभो ! सन्तत-
मोंतत्सत्तव मन्त्रमेतदधुना-
चार्य्याथ वन्दामहे ॥ ३८ ॥



# धर्म्मप्रचारः ।

---

साम्प्रतमत्र विशालायां भारतभुवि बौद्ध-जैन-खृष्टीय-महम्मदीय-यहूदी-पारसीकेत्यादि विविधधर्म्माणां नामानि कर्णगोचरतामापद्यन्ते तेषां प्रचाराश्च । परमास्माकीनो वेदैः समादृतः सनातनोधर्म्मस्तु केवलं धर्म्मनाम्नैवाभिधीयते । यद्यप्यधुनाऽयं धर्म्मः सनातनधर्म्मोऽयंधर्म्मवैदिकधर्म्मेत्यादिकाल्पनिकीं नवीनां समाख्यां भजति, परं न तथा वेदोपवेददर्शनस्मृतिपुराणेतिहासतन्त्रादिष्वार्य्यग्रन्थेषु कुत्रचिदपि विहाय धर्म्मनामापरं नाम समुपलभ्यते । सर्वगतस्य परमेश्वरस्येव सार्वभौमत्वौदार्य्यशान्त्यादिगुणानुस्यूतस्यास्य सनातनधर्म्मस्य केवलं धर्म्मनाम्नैव व्यवहारः समुचित एव ।

आधुनिकानपरान् धर्म्मास्तत्प्रवर्तकमहोदयाः स्वमनःकल्पिताभिर्नियमशृङ्खलाभिर्निगडितान् व्यधुः, एवंमदुपदिष्टनियमशृङ्खलितधर्म्मपथमपहाय जीवोद्धारको नान्यः कोऽपि धर्म्ममार्गो विद्यत इति स्थिरीचक्रुः; यदि जीवा मुक्तिपदवीं लभेरंस्तर्हि मदुपदिष्टधर्म्मद्वारैवेति च । अभिनवैर्धर्म्माचार्यैः कल्पितनियमविशेषनिगडितस्य धर्म्मस्य तद्विशेषप्रतिपत्तये केनचित्कल्पितेन नाम्ना व्यवहारः समुचित एव । परं न तथा सनातनोधर्म्मः सङ्कुचितस्वरूपः, नाप्येकदेशिदृष्टिः । धर्म्मनिर्णयं कुर्वद्भिः पूज्यचरणैस्त्रिकालदर्शिभिर्महर्षिप्रवरैर्धर्म्मशब्दार्थ इत्थं प्रकाशि, यत् यया परमेश्वरप्रणयेयं सृष्टिक्रिया धृता स एव धर्म्म इति । उक्तञ्चात्र महात्मभिर्व्यासदेवैः, यथा—

या बिभर्त्ति जगत्सर्वमीश्वरेच्छाह्यलौकिकी ।
सैवधर्म्मोहि सुभगे ! नेह कश्चन संशयः ॥

धारणाद्धर्ममित्याहुर्धर्मो धारयते प्रजाः ।
यत्स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥

**येनैतद्धार्यते स धर्म** इति भक्तिदर्शनेऽपि । अत्रायं निष्कर्षः, सर्गस्थितिप्रलयरूपो जगतो मुख्यो नियमः । आकीटमाब्रह्मणश्च सर्व एव पदार्थाः क्रमश उत्पत्तिस्थितिलयायत्ताः । इममेव क्रमभवं नियमं यो धारयति स धर्म इति । जीवोऽप्येतदायत्त एवेति न परोक्षं विचारवतां मेधावताम् । सत्त्वादिगुणत्रयानुसारं जीवोऽप्युत्पद्यते, तिष्ठति, लीयतेचेति तत्त्वम् । धर्मशब्दस्य व्युत्पत्तिलभ्योऽर्थो धारणकर्ता, नैरुक्तास्तु धारणकर्तृयोग्यनियमरूपमर्थं मन्वत इति धारणौपयिको नियमो धर्मशब्दस्यार्थ इति फलितम् । एवं देहधारिमूर्द्धन्यानां मनुष्याणां सर्वाणि कर्माणि धर्मायत्तान्येवैतस्य क्रमोन्नतिकरत्वात् । यथा सर्गस्य सर्वे पदार्था धर्मनिघ्ना एवं मनुष्योऽपि धर्माधीन एवेति, नात्र विप्रतिपत्तिलेशोऽपि । अत्र ब्रह्माण्डगोलके द्विधा क्रिया दृष्टिपथमायाति, एका जडरूपाऽपराच चेतनरूपा । द्विविधामिमां क्रियामपहाय नान्याऽपरा काऽपि तृतीया क्रिया समुपलभ्यते । जडरूपा अविद्या, चेतनरूपा च विद्या भवति । जडक्रिया मनुष्यानपहाय सकलानेवोपलादिस्थावरपदार्थान् देहिनश्चापि व्याप्याधितिष्ठति । मानवान् विहाय सर्वेऽन्ये जीवाः प्रकृतिपरतन्त्राः । तेषां जीवानामन्तःकरणे सर्वतोमुखं जडप्रकृतेराधिपत्यं विजृम्भते ऽतएव ते प्राकृतिकमेव कर्म कर्तुमीशते, नतु बुद्ध्या ऽभिनवानि कार्याणि । परं मानवास्तु चेतनक्रियाया अप्यधिकारिणोऽतस्ते चलस्वभावामपि बुद्धिं स्ववशे संस्थाप्य तया नूतनानि कार्याणि कर्तुं क्षमन्ते । परमिममुन्नततरमधिकारं प्राप्य यथा मनुष्याः प्रोन्नता भवन्ति, एवमवनता अपि सम्भवेयुः । मानवानां समुन्नतज्ञानितया ते पुरुषार्थानुष्ठायानुभूयचेश्वरसाक्षात्कारं मुक्तिं प्राप्तुं शक्नुयुः, अथवा पुरुषार्थान् विस्मृत्योत्सृज्यचेश्वरचिन्तनमवनता अधःपातं प्राप्नुयुरिति द्वयमपि पुरुषेच्छायत्तमेव । मानवा यतश्चेतना अतस्तेषामुत्तरदायित्वमप्यधिकं स्थापितम् । अखिलेष्वपि जन्मसु मनुष्यजन्म विहाय सर्वे जीवास्तामसा अतो न ते धर्मतत्त्वं विचारितुं

प्रभवन्ति । परं जीवो यदा सृष्टिक्रमवशात् तासु योनिषु क्रमशो भ्रमन् मनुष्ययोनिमाप्नोति, तदा धर्म्मतत्त्वानुशीलितुं शक्नोति; किन्त्विमामेव योनिमासाद्य मुक्तिसाविध्यमधिगच्छति । यथा रिङ्गत्तरङ्गवत्यां नद्यां निमग्नं कञ्चित्पुरुषं कृपाविष्टा सा स्रोतस्विनी वारमेकमुच्चयत्येव, तदा यदि स पुरुषस्तरङ्गान् वशीकर्तुकामो यतते तां निस्तर्तुं तदाऽपहतान्तरायो याति विपत्समुद्रपारम्, परं यदि ससम्भ्रमं बुद्ध्या वियुक्तो पुनर्निमज्जति तदा प्राप्नोत्येव स वराकः शोचनीयामवस्थाम् । एवं जीवकृपाकरलम्बा मातृभूता प्रकृतिस्तान् धर्म्मतत्त्वविचारार्हान् विदधात्येव, परं तत्त्वतो धर्म्मरहस्यमवगम्य मुक्तिपथारोहणं मनुष्यायत्तमेवेति । अमुना सन्दर्भेण सिद्धान्तितमित्थं शास्त्रकृद्भिर्यत् यत्कर्मानुष्ठानेन मनुष्या निरर्गलमपवर्गं प्राप्नुवन्ति स धर्म्म इति, येन च मध्येऽवलम्बन्ते, अधःपतनमृच्छन्ति वा सोऽधर्म्म इति । उक्तञ्चात्र महर्षिभिर्व्यासदेवैः, यथा—

प्राप्नुवन्ति यतः स्वर्गमोक्षौ धर्म्मपरायणे! ।
मानवा मुनिभिर्नूनं स धर्म्म इति कथ्यते ॥

सत्त्वगुणोपचयो मनुष्याणां मुक्तिपथसारल्यं विदधाति, अतः सत्त्वगुणवृद्धिकरं कर्मापि धर्म्म इति शब्द्यते । तमसा च वद्धोमानवो ऽधिकमधःपतनमधिगच्छतीति तमोगुणवृद्धिकरं कर्माधर्म्म इत्यभिधीयते । स्मरन्ति हि व्यासाः, यथा—

सत्त्ववृद्धिकरो योऽत्रपुरुषार्थोऽस्ति केवलः ।
धर्म्मशीले ! तमेवाहुर्धर्म्मं केचिन्महर्षयः ॥

स्वशास्त्रपरिशीलनपुरस्सरं मनुष्याणां सर्वाण्येव कार्याणि धर्म्माधीनानि, अतएव धर्म्मशास्त्रग्रन्थेषु मानवानामभ्यवहरणपानशयनप्रबोधनगमनभ्रमणोपवेशनोत्थानदर्शनश्रवणादिचेष्टाभिः सह धर्म्माधर्म्मयोः सम्बन्धोऽङ्गीक्रियते । अन्यैरपधर्म्मावलम्बिभिः कल्पितैदानीन्तनधर्म्माः कतिपयैर्नियमविशेषैर्निगृहीतास्तैः स्थिरीकृतो नियम एव धर्म्मनिर्णायको भवति, तदतिरिक्ताः शोभना अपि वार्ता नेहन्तेऽङ्गीकर्तुम् । परं न तथाऽयं सनातनो

धर्म्मो यतो विज्ञानमनुसृत्य तिष्ठतो धर्म्मस्य पार्थिवाः सर्वे पदार्थाः जीवानां सर्वाणि कर्माण्यपि चास्याधीनानि; धर्म्मप्रवणा एव मानवा ऐहिकमभ्युदयमैश्वर्यसुखादि, पारत्रिकञ्च स्वर्गादि समश्नुवते; मोक्षप्राप्तिस्त्वस्य परमं कर्तव्यमिति निर्विवादम्। तथा च वैशेषिकदर्शने-

यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्म्म इति। अस्य सनातनधर्म्मस्याभोगः परमो महान्, अतो न सोऽपरान् निन्दनीयानपि धर्म्मान् गर्हयति। कलुषितबुद्धिभिः धर्म्मान्तरावलम्बिभिः कामं निन्दितोऽप्ययं धर्म्मः पितेव पुत्रस्य क्रीडाभिस्तेषामाक्षेपवचोभिः परमं प्रमोदमश्नुते, तेषां भव्यञ्च सर्वात्मना कामयते। धर्म्मनिर्णयं विदधता, तस्य वैज्ञानिकमर्थञ्च चिन्तयता धार्म्मिकेणेयं सनातनधर्म्मस्यात्युदारा मूलभित्तिरवधेया; धर्म्मप्रचारकैश्चापीदं न विस्मर्तव्यम्, येन तेऽतिक्रम्यान्तरायशतं सम्मदभाजो भवेयुः, कल्याणानि चान्येषां साधयेयुः। नामाहङ्कारविकाश्रयो, तत्तत्पदार्थगतरूपगुणादिविशिष्टं वस्तुप्रतिपादनार्थमेव संज्ञाविशेषः समाद्रियते। संज्ञाभेद एव लघुतां गुरुताञ्च व्यवस्थापयति,नाम्नाच सर्वव्यापकत्वं व्याहतं भवतीति जागरूको नियमः। एवं सनातनस्यास्य धर्म्मस्य धर्म्मनाम्नैवाभिधानमुचितमिति भाति। धर्म्मान्तरव्यावृत्त्यर्थमस्यार्य्यधर्म्म-सनातनधर्म्म-हिन्दूधर्म्म-वैदिकधर्म्मेत्यादीन्यभिधानानि काममङ्गीक्रियताम्, परं सर्वगतस्य समदर्शिन उत्पत्त्यन्तशून्यस्य सर्वजीवहितसम्पादनदक्षस्यास्यापौरुषेयस्य 'धर्म्म' नाम एव केवलं शोभततरामिति सर्वं सुस्थम्।

शास्त्रेष्वित्थं वर्णितमवलोक्यते यत् कृतयुगे सुकृतं चतुर्भिः पदैर्वर्तमानमासीत्,त्रेतायान्तु त्रिपादेव समभवत्, एवमुत्तरोत्तरं ह्रासमापन्नो द्वापरे द्विपात् सम्वृत्तः, कलौत्वतितीणतन्वेकेनैव पदा तिष्ठन्नास्ते। जाते महाभारतीयेऽनेकजनक्षयकरे रणे वर्षाणां पञ्चसहस्रमभिव्याप्य कलिरभितोभारतवर्षे विजृम्भते। आकलिप्रवृत्यत्र प्रधानधर्म्मक्षेत्रे भारतवर्षेऽतितरां विप्लुतोऽयं धर्म्मो विप्लाव्यते चानुदिनं, तदत्र धर्म्महीनतैव मुख्यं कारणम्। अमुं भारतवर्षं पितृवनतुल्यं विदधतो महाभारतीययुद्ध-

स्थानन्तरञ्च कति वा राजोपप्लुतयः, बौद्धहस्ताघाताः, यवनात्याचाराश्च धर्म्महानौ हेतवो न समजायन्त, यैः किल मनुष्यबुद्धिः कालुष्यमुपययौ । अतएव परःशतानि मतान्यत्र प्रवृत्तानि, एतदाधारेणैवाभिनवा धर्मसम्प्रदायपद्धतयः प्रादुर्बभूवुः । पुरा पूर्णं स्वरूपं दधति धर्म्मे मनुष्या अपि धर्म्मस्योत्तमं मुक्तिफलमेवाभिलषन्तो धर्म्माचरणं चक्रुः । परं क्रमशो ह्रासतामनुभवति पादमात्रावशिष्टे धर्म्मे कलुषितबुद्धयोऽविद्योपलिप्ता जीवा सत्त्वज्ञाध्यात्मिकं फलं बहिरदृष्ट्वैश्वर्य्यबुद्धयः स्वीयसम्प्रदायोपचयार्थे नानाविधानि धर्म्ममार्गाणि ससृजुः । यतो धर्म्म एकपादभवदतएव स्वकीयानेव धर्म्मपथान् प्रधानतया मन्वानाः स्वधर्म्ममार्गैकपक्षपातिनो वैदिकेनोऽपरान् धर्म्मपथान् 'अधर्म्माकलिता' इति निन्दन्त उपेक्षन्ते । यथा कश्चिद्वायुरोगपीड़ितो जनः स्वयमेव बुद्धिशून्यः, परं सर्वानेव मानवान् बुद्धिहीनानुन्मत्तांश्चावगच्छन् हसति हस्तान्दोलनपूर्वकम् । धर्म्मः कलौयुगेऽस्मिन्नितरां न्यूनतामभजत् । शास्त्रेष्वेतोऽप्यधिकहीनदशासूचिकां भविष्यन्तीं वार्त्तामाकर्ण्य केचिद्दुर्बला धार्म्मिका विचारयन्ति, यन्महीयसा कालमहिम्ना ह्रस्वकायो धर्म्मो जातोऽतो न पूर्णतयाऽत्र युगे धर्म्मसाधनं भविष्यतीति ।

धर्म्मस्य सत्ययुगे चत्वारः पादाः कलौत्वेक एवेत्येतस्य नैष आशयो यत् सत्ययुग एव धर्म्माधिकारः पूर्णतया प्राप्तुं शक्यो नाधुना, अपित्वयमाशयः यथाभिप्रायः यथा पूर्णरूपेण सत्ययुगे धर्म्मो वर्त्तमान आसीत् तथेदानीमस्त्यपीति, न स्वरूपे कश्चिदपि परिणामः सम्वृत्तः, परन्तु इयान् भेदो यत् कृतयुगे धर्म्मे प्रधानतया गाम्भीर्यमासीदधुना तु न्यूनता दृश्यते । यथा पञ्चसहस्रघटमितजले कूपे जलगाम्भीर्यकृतं निमज्जनं सम्भवत्येव, परं तदेव जलं कूपादुद्धृत्य विस्तृतसमतलभूमौ प्रक्षिप्तं यत् गभीरतां विना पिपीलिकामपि मज्जयितुं न प्रभवति, एवं सत्ययुगे धर्म्मो गभीररूपेणासीत्, परमधुना गाम्भीर्याभावात् मानवान् श्रेयसाऽभियोक्तुं शक्नोति । कूपजले गाम्भीर्यमासीच विस्तृतिः, भूमिजले च विस्तृतिः न गाम्भीर्यं, परं जलमान

न्तूभयत्रापि तुल्यमेव। केवलं गाम्भीर्यापगमादेव जलस्य कार्य्यकारित्वशक्तौ भेद उपलब्धः। यादृश्या धर्म्मशक्तेर्विकाशो सत्त्वयुगीनपुरुषेष्वासीत्तादृश्येव धर्म्मशक्तिरधुनाऽपि वर्तते, परमिदानीं तस्य पूर्णविकाशः कुत्रचित् विरलेष्वेव जनेषु समुपलभ्यते; विस्तारबाहुल्यञ्च यत्रतत्रोपलभ्यते।

विदिततरमेतज्जगदितिहासमालोकयतां यत् धर्म्मस्यापका, धर्म्मसंस्कारका, धर्म्मविस्तारकाश्च धर्म्मनेतारो भागत्रये विभक्तुं योग्याः यथा ज्ञानी, साधकः, पण्डितश्च। स धर्म्मप्रचारको ज्ञानीत्यभिधीयते योऽपहतपाप्मना ज्ञानदृशा धर्म्मस्य बहिःसाधनान्याभ्यन्तरसाधनानि च प्रत्यक्षीकृत्याविरतं सार्वभौममेव धर्म्मभावमुपदिशति, यथा भगवन्तौ कृष्णचन्द्रवेदव्यासौ महर्षयश्च। इयान् परं विशेषो ज्ञानिधर्म्मप्रचारकेषु यत् तेष्वतिशयज्ञानज्योतिषः प्रकाशेन तेषामुपदेशवाक्यानि सर्वैः सम्प्रदायिभिरखिलैश्च धार्म्मिकैः हितकरत्वेनाद्रियन्ते। तेषामुपदेशसुधाधाराभिः सम्मृष्टैनसोऽधिकारिणो यथाऽधिकारं श्वःश्रेयसमधिगच्छन्ति।

द्वितीयश्च धर्म्मप्रचारकः साधक इत्याख्यायते। यः साधनद्वारा भगवतोऽनन्तासु सत्तासु कस्यामप्येकस्यां विचरन् स्वानुभूताश्च सत्ताः समुपदिश्य धर्म्मस्यैकमंशं समुद्धरति; वैष्णव–शैव–शाक्तपथायेसरा अभिनवा आचार्या इमामेव साधकपदवीमनुप्रविष्टाः। एभिर्महापुरुषैर्यासमयं धर्म्मस्य कस्याप्यंशस्य समुद्धारोऽतितमां समपादि, श्रेयसा च बहवो जीवा योजिताः। परमेवम्विधानां धर्म्मप्रचारकाणामुपदेशे न्यूनतैषा दृश्यते यत् सङ्कोचयत्येषामुपदेशवाक्यं सनातनधर्म्मस्य सार्वभौमभावम्, यत एतेषामुपदेशस्तु केवलमेकदेशीति।

तार्तीयीकः पण्डितधर्म्मप्रचारकः स भवति यो न त्रिकालदर्शी ज्ञानी नापि भगवत्साधकः परं विद्यावलेपबृंहिततेजा शास्त्राभिहितपथेन धर्म्मानुपदिशति। सचोत्तममध्यमाधमभेदेन त्रिविधः। ये विद्वांसो निशितधारेणासिनेव प्रबलतर्कजालेनान्येषां धर्म्ममतं खण्डयन्ति परं जीवानुपकर्तुं न कमपि धर्म्मपथमुपदिशन्ति तेऽधमपण्डितधर्म्मप्रचारका इत्यभिधीयन्ते। ये तु विद्वांसोऽपरेषामपि मतं न्याययुक्त्या स्वसम्प्रदाये सङ्गमय्य

तान् स्वमतावलम्बिनो विदधते ते मध्यमपण्डितधर्म्मप्रचारका भवन्ति। येषां महानुभावानां सकलशास्त्रपारदृश्वनां प्रवृत्तिर्न परमतखण्डनपरा, अपितु ये सर्वात्मना एतदर्थमेव चेष्टन्ते यत् सर्व एव धर्म्मतत्त्वजिज्ञासवो यथावत् शास्त्ररहस्यमवगच्छेयुः, यतः शास्त्रं सार्वजनीनमाम्नातमिति, ते उत्तमपण्डितधर्म्मप्रचारकोपाधियोग्याः। एवञ्च अधमः पण्डितधर्म्मप्रचारकस्तु धर्म्मराज्यतो दुष्टाः प्रजा निर्वास्य स्वल्पैरेवाहोभिर्धर्म्मराज्यमरण्यतुल्यं विधत्ते। मध्यमपण्डितधर्म्मप्रचारकास्तु धर्म्मराज्यतः प्राकृतान् निर्वासयन्तः प्रोत्कृष्टाः प्रजा वर्द्धयन्ति। उत्तमाः पण्डितधर्म्मप्रचारकास्तु सर्वहितसम्पादनप्रवणया बुद्ध्या श्रेष्ठजनेषु प्रांशुकर्म्मापरेषु निम्नश्रेणिषु पुरुषेष्वधमं कर्मभारं विन्यस्य शान्तिसम्पादनायोद्युञ्जते। अधमधर्म्मप्रचारका नास्तिक्याशान्त्यधार्म्मिकताः प्रसारयेयुरिति सम्भाव्यते, मध्यमधर्म्मप्रचारका दम्भं पारस्परिकं विरोधञ्चोत्पादयेयुरिति, यत एते माध्यमिका धर्म्मप्रचारकाः साधकधर्म्मप्रचारकसम्प्रदायावलम्बिनः प्रायशो भवन्ति। परन्तूत्तमधर्म्मप्रचारकैर्धर्म्मभूमावत्र सुफलाशाऽभिकाङ्क्ष्यते, यतएते ज्ञानिधर्म्मप्रचारकाणां महर्षीणां मतमनुसरन्ति। अधमा धर्म्मप्रचारका नरकपथं, मध्यास्तु स्वर्गसोपानं, उत्तमास्तु मुक्तिपदमुपदिशन्तीति सम्भाव्यते। किमु वक्तव्यं ज्ञानिधर्म्मप्रचारकाणान्तु महात्मनां माहात्म्यम्, यतस्ते पूर्णज्ञानविकाशात् त्रिकालप्रत्यक्षा निःशेषज्ञाश्च भवन्ति। अधुनाऽपि गृहमुत्सृज्य फल्गुफलतः संसारतो विरज्य महानुभावाः साधवो धर्म्मप्रचारवर्द्धयितारः कुत्रचिद् दृश्यन्ते; यत्र च महात्मानस्ते गच्छन्ति तत्प्रदेशस्थाः सर्वे जीवाः समुपकृता भवन्ति। यथासमयमाविर्भूय साधकधर्म्मप्रचारका जीवानां कल्याणं सम्पादयन्ति। यद्यपि प्रोन्नता अधिकारिणो न सर्वदा लभ्यन्ते तथापि साधनराज्ये साधकधर्म्मप्रचारकाः कुत्रचिदुपलभ्यन्त एव। इमे धर्म्मप्रचारका भगवद्भावराज्यं दृष्ट्वा यत् किञ्चिदुपदिशन्ति तदवितथमेव; यद्यप्येषामुपदेशस्यैकदेशित्वं परं न तस्यासत्यत्वं नापि भ्रमकरत्वमिति निश्चयः।

पण्डितधर्मप्रचारकाणां धिषणा न योगयुक्ताऽतो न सर्वदर्शिनी, नापि साधनयुक्ताऽतो न भगवद्भावग्राहिणी, केवलं शास्त्रमेवावलम्बमाना तिष्ठति। यद्यपि ते शास्त्रानुसारमेवोपदिशन्ति परं बुद्धिमालिन्यात् शास्त्रतत्त्वार्थज्ञानेऽन्तर उत्पद्यते। त्रिगुणात्मिका किल बुद्धिः, येषां सत्त्वसम्पन्ना बुद्धिस्तेतु शास्त्रतत्त्वार्थान् याथार्थ्यतोऽवगन्तुं शक्नुवन्ति, रजसावृतबुद्धयोऽहङ्कारादिवशीभूतस्वान्ताः कार्याकार्यमजानन्तः शास्त्रभावार्थान् स्वमतानुसारिणोऽवगच्छन्ति, किन्तु वर्ण्यते तामसी बुद्धिः यतस्तया सर्वदा भ्रमोत्पत्तिसम्भावना विद्यते, आसां तिसृणामपि लक्षणानि श्रीमद्भगवद्गीतोपनिषदि वर्णितानि। तद्यथा—

प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी॥
यया धर्म्ममधर्म्मञ्च कार्यञ्चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी॥
अधर्म्मं धर्म्ममिति या मन्यते तमसा वृता।
सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ! तामसी॥

यदि दैवकृपया धर्म्मप्रचारकाणां बुद्धिः सात्त्विकी तदा तु शास्त्ररहस्यानधिगम्य जिज्ञासूनां हृदये शान्तभावस्थापनं सुकरम्, यदि तु तेषां बुद्धौ राजसिको भावः समुदितश्चेत्तदा तु तेषामुपदेशतः सम्प्रदायेषु पारस्परिको विरोध एधते, यदा च तमोगुणाधिक्यं तदा तु तेषामुपदेशः केवलं प्रमादाय नास्तिक्यप्रचाराय च भवति। अतः पण्डितधर्म्मप्रचारकाणामिदं श्रेयस्करं भविष्यति यत् ते पूर्वं बुद्धेर्मालिन्यमपनीय तां सत्त्वसम्पन्नां विधाय ततो धर्म्मप्रचारे प्रवर्तेरन्। सत्त्वगुणस्य लक्षणं प्रकाशवत्त्वं ज्ञानयुक्तत्वञ्च, राजसिकस्य गुणस्याहङ्कृतिः कर्मसु समुत्साहः, तमसश्च प्रमादोऽज्ञानतेति। राजसिकोगुणस्तमोगुणमभिभवति सात्त्विकस्य च रजोगुणोऽधीनो भवति, अतः सर्वतः श्रेष्ठं सत्त्वगुणस्यैव। अतः सात्त्विका एव पण्डिता याथार्थ्यतो धर्म्मप्रचारायोपयुक्ताः। त्रिगुणलक्षणानि गीतोपनिषदि वर्णितानि। यथा—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः ।
निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥
तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ! ॥
रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ।
तन्निबध्नाति कौन्तेय ! कर्मसङ्गेन देहिनम् ॥
तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ।
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥
सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ! ।
ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ! ।
रजस्सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥
सर्वद्वारेषु देहेऽस्मिन् प्रकाश उपजायते ।
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥
लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥
अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥

कतिचन स्वदेशहितैषिणो विचारका इत्थं विचारयन्ति यद् भारतवर्षेऽत्र समुद्भूतस्य नानाविधधर्म्मसम्प्रदायस्यैकविधेनैव धर्म्मोपदेशेन कथमुपकारः सम्भाव्यते ? विमलबुद्ध्या विचारिते तु स्पष्टमेतत् प्रतीयते यत् सर्वेऽपि धर्म्मपथा बाह्यस्वरूपतः परस्परं भिन्ना भवन्तु, एकस्य धर्म्मपथस्याचारो नापरधर्म्मपथाचारसादृश्यमनुभवेत्, परमखिलेष्वपि सम्प्रदायेषु धर्म्मरूप एकविध एव भवति ; यद्यपि तेषां बाह्यसाधनानि परस्परमसदृशानि परमान्तरिक्यो धर्म्मवृत्तयः सर्वैरेव सम्प्रदायावलम्बिभिरेकमत्येन गृह्यन्ते । महाराजयुधिष्ठिरस्य सत्यप्रियत्वसहिष्णुते, देवव्र-

तस्य दृढप्रतिज्ञता, लक्ष्मणस्य भ्रातृसौहार्द्ये जितेन्द्रियता च, सीतासावित्र्योः सतीत्वम्, वशिष्ठस्य महर्षेः शमः क्षमा च, भीष्मपितामहस्य शूरता गाम्भीर्यञ्च, राज्ञो जनकस्य निष्कामवृत्तिः, बलेस्त्यागः, शुकदेवस्य वैराग्यं, देवर्षेर्नारदस्य भगवद्भक्तिः कस्य वा साम्प्रदायिकस्य नोपस्वेहय-त्यन्तःकरणम् ? के वा साधकाः श्रेयस्करीरिमा वृत्तीर्धारयन्तः समुन्नता न भवेयुः ? स्वदेशीयधर्म्मसम्प्रदायानान्तु का कथा, पृथिव्यां वर्तमानाः सर्वेऽपि धर्म्मपथा एवंविधान्तरिकधर्म्मवृत्तेः समुन्नतिं न किल न प्रशशंसुः । धर्म्मप्रचारकैर्विधाय स्वदृशोः सार्वभौमतां धर्म्मोपदेशे विहिते न कस्यापि सम्प्रदायस्य क्लेशलेशो नाप्यधिकारिणां हानिः सम्भाव्यते । सार्वभौमभित्तिमधिष्ठाय विधाय चोच्चावचप्रदेशेषु सर्वत्र समां दृष्टिं यदि धर्म्मप्रचारका धर्म्मोपदेशे प्रवर्तेरन् तदा न कदापि विफलमनोरथाः सम्भवेयुर्नापि कस्यचिद् ग्लानिः समुत्पद्येत । धर्म्मः किलैश्वरिकम्वस्तु, अत ऐश्वरिकवस्तुभ्यो न कस्यापि कदापि हानिः सम्भवति । यथा प्रत्येकसाम्प्रदायिकधर्म्मेषु या या सन्निहिता सार्वभौमधर्म्मसत्ता सा निखिलसम्प्रदायहितं विदधाति, एवं सार्वभौमरूपां भित्तिमवलम्ब्य धर्म्मप्रचारका धर्म्मं प्रचारयेयुस्तदा स धर्म्मप्रचारः सर्वेषां मङ्गलसम्पादको भविष्यति । त्रिकालसमीक्षकाः पूज्याङ्घ्रयो महर्षयः सर्वदा इमामेव भित्तिमुपलक्ष्य धर्मप्रचारमकुर्वन्, अतस्तेषामुपदेशाः ज्ञानभूम्यनुसारमधिकारभेदवत्वेन परस्परं विरुद्धा अपि जीवानां श्रेयस्सम्पादनायालम् ।

प्रकाशनं 'प्रचार'शब्दार्थः, धर्म्मस्य याथार्थ्यतो रहस्यप्रकाशनं 'धर्म्मप्रचार' शब्देन व्यवह्रियते । परं धर्म्मप्रचाराय स एवोपयुक्तो यः पूर्वाभिहितसृष्टिसम्बन्धिधर्म्मतत्वानि पूर्णतया ऽवगच्छति । वस्तुतो गुरुदेव एव धर्म्मप्रचारकशब्दवाच्यतां धत्ते । तन्त्रग्रन्थेषु भगवताऽऽदिदेवेन महादेवेनोपगीतम्, यत्—"त्रिकालदर्शी सर्वशास्त्रपारदृश्वा धर्म्मज्ञः सात्त्विक एवपुरुषो गुरुशब्दवाच्यतां लभते", एतेषामेव साहाय्यप्राप्त्या हि जीवाः कल्याणपदभाजो भवन्ति । गुरुलक्षणं यथा विज्ञानभाष्ये—

सर्वदर्शी तु यः साधुर्मुमुक्षूणां हिताय वै ।
व्याख्याय धर्म्मशास्त्रांशं क्रियासिद्धिप्रबोधकम् ॥
उपासनाविधेः सम्यगीश्वरस्य परात्मनः ।
भेदान् प्रशास्ति धर्म्मज्ञः स गुरुः समुदाहृतः ॥
सप्तानां ज्ञानभूमीनां शास्त्रोक्तानां विशेषतः ।
प्रभेदान् यो विजानाति निगमस्यागमस्य च ॥
ज्ञानस्य चाधिकारांस्त्रीन् भावतात्पर्यलक्ष्यतः ।
पुराणेषु च तन्त्रेषु भाषायास्त्रिविधां स्तुतिम् ॥
सम्यग्भेदैर्विजानाति भाषातत्त्वविशारदः ।
निपुणो लोकशिक्षायां श्रेष्ठाचार्यः स उच्यते ॥
पञ्चतत्त्वविभेदज्ञः पञ्चभेदां विशेषतः ।
सगुणोपासनां यस्तु सम्यग् जानाति कोविदः ॥
चतुष्टयेन भेदेन ब्रह्मणः समुपासनाम् ।
गम्भीरार्थां विजानीते बुधो निर्मलमानसः ॥
सर्वकार्येषु निपुणो जीवन्मुक्तस्त्रितापहृत् ।
करोति जीवकल्याणं गुरुश्रेष्ठः स कथ्यते ॥

इदं जगत् सदसद्रूपिणोर्ब्रह्ममाययोः क्रीडावनिः,, उभाविमौ याथातथ्यतो ज्ञात्वा यः पुरुषसिंहः सत्पथमेव सदाऽध्यास्ते स एव गुरुर्भवति । महानुभावा ज्ञानिप्रवरा वेदव्यास-कपिल-याज्ञवल्क्य-पतञ्जलि-गौतममहर्षयः स्वस्वनिर्मितेषु ग्रन्थेषूत्तममध्यमाधमभेदतः प्रज्ञा त्रिविधेत्यामनन्ति । उत्तमप्रज्ञा विदेहलयावस्थायां पुरुषमुपसीदति । उत्तमप्रज्ञया एव जीवः शरीरमुत्सृज्य नभश्च्युताम्भोविन्दुरिव ब्रह्मसमुद्रं सङ्क्रम्य मुक्तिपदं निविशते; अत उत्तमप्रज्ञाया वर्णनञ्चात्रापेक्ष्यते । अधमप्रज्ञा सा भवति यदा मनुष्यो ज्ञानभूमिं प्राप्य समुन्नतो भवति, अर्थात् तस्मिन् बुद्धिः समुन्मिषति, परं बुद्धेर्मलीमसतयाऽन्तःकरणं संशयापन्नं भवेदिति । यद्यपीयमवस्था मनुष्यैः श्लाघ्या, परमस्याः

संशयप्रधानतया नेयं गुरुपदवाच्यतानिमित्तम्, यतः सन्दिहानो जनः पण्डितोऽपि धर्म्ममुपदेष्टुं न पारयति। परमनयोरुत्तमाधमयोः प्रज्ञयोरन्तरालभवा मध्यमा प्रज्ञा केवलं गुरुत्वयोग्या; इत्यमेव भगवता महादेवेन पूज्यवरणैर्महर्षिभिश्चानुशासितम्। मध्यमप्रज्ञा सा भवति, यथा महात्मानः साधनपूर्णतया भगवन्तं साक्षात्कृत्यापगतसंशयचित्ता भवन्ति, तदा ते केवलं प्रारब्धानि कर्माण्युपभोक्तुमेव शरीरवन्तो जगति विचरन्ति। मनुष्याणामियं श्रेष्ठावस्था शास्त्रेषु 'जीवन्मुक्ति'रिति वर्णिता। यद्यपि सर्वदा ज्ञानिन एवोपदेष्टारो भवन्ति, तथापि मध्यमावस्थाका महात्मानो जीवन्मुक्ता एव केवलमुपदेशार्हा गुरवो भवितुं योग्याः। अतो धर्मोपदेशे धर्म्मप्रचारश्रवणे चोपदिशतां गुरूणामुपदेशग्रहीतॄणां शिष्याणाञ्च 'धर्म्म-प्रचार' इत्यनयोः शब्दयोर्वेदोक्तं तात्पर्यं यथावदधिगम्य स्वस्वकार्येषु प्रवृत्तिः समुचिता। अधुना यादृशी धर्म्मप्रचारप्रथा प्रचिता, तया पुरुषार्थं कृत्वाऽपि न तदनुरूपं फलमधिगम्यते ऽतस्तन्मूलमपि गवेषणीयम्, यतः कार्ये कार्यफलञ्चोपलभ्यैव तेन कल्याणप्राप्तिराशास्तुं शक्यते।

आधुनिकधर्म्मप्रचारे दृश्यते यत् धर्म्मप्रचारकाः पण्डितमहोदया राजसिकप्रकृतिपरतन्त्राः सन्यासिनश्च सदसि प्रायशो व्याख्यानैर्धर्म्मं समुपदिशन्ति। रीतिरियं राजसिके जगति परमोपकारिण्यपि न सात्त्विकजगति धर्म्मप्रचारकर्मणि फलप्रदा, अतोऽधुनातनाः साम्प्रदायिकधर्म्मप्रचारकाः प्रबलतमपुरुषार्थद्वारा बहुप्रयस्यापि केवलं वाचनिकमेव कर्म कुर्वते, याथार्थ्ये कर्म स्वल्पमेव साधितमेभिः; रीत्याऽनया राजसे कर्मणि फलं लब्ध्वाऽपि सात्त्विके कार्ये न फलप्राप्त्याशा दृश्यते। साम्प्रतं या धर्म्मप्रचारशैली समादृताऽभिनवैर्न सा प्राचैरनुमोदिता, यतः पुरा न प्राञ्चो हठाद्धर्म्ममुपदिशन्तिस्म। व्याख्यानं, यदाङ्गलिशभाषायां 'लेक्चर' 'स्पीच' इतिनाऽभिधीयते, इयं प्रथा यूरोपीयाणाम्। राजसाः पाश्चात्यास्ते विद्वांसो राजसिककर्मप्रचाराय तथाविधां प्रथां प्रथयामासुः। एवम्विधया वक्तृतया राजसिकानि कर्माणि सिद्ध्यन्त्येव, तामेव शैलीम-

गुरुस्य नव्या भारतीया अपि धर्म्मप्रचारे सहायकतया मन्यन्ते । येन कारणभूतेन गुणेन यत्कार्यं निर्मीयते तत्फलमपि तदनुगुणमेवोत्पद्यते, "कार्यं निदानाद्धि गुणानधीते"—इत्युक्तत्वात् । विद्याभिमानिनः पण्डितम्मन्यास्तदया धर्म्मोपदेशतः प्राक् रजोगुणवशीभूताः सन्त इत्थमभीप्सन्ति "ज्ञानिनो वयम्, धर्म्ममुपदेक्ष्यामः"—इति तदा समुपनिहितं पदं रजोगुणेन, ततः परमाह्वानपत्रम्वितीर्य्य जनानामाकारणमपि रजोगुणसमुद्भूतम् । एवमुपदेष्टारो राजसिका भवन्ति, श्रोतारोऽपि राजसिकास्तामसिका वा भवन्त्येव । उपदेष्टृपरीक्षणबुद्ध्या कालयापनेच्छया च श्रोतारः सभास्तारा भवन्ति । यदैते सभायां परीक्षणबुद्ध्याऽऽगच्छन्ति तदा राजसिकाः, यदा तत्र समययापनं कर्तुं प्रमादायत्ता वाऽऽगच्छेयुस्तदा तामसिका इति सुव्यक्तमेव । अतो राजसिकेषूपदेष्टृषु तामसिकेषु राजसिकेषु वा श्रोतृषु सत्सु अभिनवया धर्म्मप्रचाररीत्या सत्त्वगुणप्रभवमात्मज्ञानं कथमुपलभ्येत ? यतो रजसा तमसा च राजसिकं तामसिकं वा फलमुत्पद्यते, न कदापि ताभ्यां सात्त्विकफलप्राप्तिः सम्भवति । किन्तु चिरन्तनसमयप्रथितधर्म्मप्रचारप्रकारेणैव सर्वदा धर्म्माधिकारः प्राप्तुं शक्यः, तत्प्रकारश्च सात्त्विक एव, एतेन सात्त्विकं फलमधिगम्यत एव । इयं रीतिः सनातनधर्म्मानुमोदिता धर्म्मोपदेशाय धर्म्मोपदेशग्रहणाय च, यत् चित्तादोषप्लुता जिज्ञासव आत्मानमनुपयोगिनमिव मन्यमाना दीनाः श्रेयसे गुरुमुपगम्य सप्रश्रयं बद्धाञ्जलिपुटं धर्म्मोपदेशमभिलषेयुः । यस्य हृदये वैराग्याङ्कुरः किञ्चित् समुन्मिषति स एवेममसारं संसारं दुःखप्रचुरं धर्म्मज्ञानश्चोत्तमसुखमूलमिति कलयितुं शक्नोति । एवं विरक्ता धर्म्मोपदेशं जिघृक्षवो निस्सारमात्मानं जानन्तो गुरुमुपयुक्तं ज्ञात्वा विधायाञ्जलिपुटं तं यदोपसीदन्ति तदा तेषां चेतः स्वत एव सात्त्विकं रूपं प्राप्स्यतीति कोऽत्र सन्देहावसरः ? एवं यदाऽकिञ्चनस्य गुरोर्दृक् दीनं शिष्यमभालयति तदा ज्ञानात्मनां तपःस्वाध्यायरतानां जीवहितकराणां

गुरूणां करुणारसप्लुते हृदये सात्त्विकी उपदेशरीतिः स्फुरति । नात्र रजोगुणप्रचारः, यतो न गुरुदेवो यदृच्छया प्रसन्न समुपदिशति, किन्तु दयावशीभूतः परानुपकर्त्तुकामो गुरुः समुपदिशति यदा शिष्यं, तदा तस्मिन् सत्त्वस्यैव विकाशः पूर्णतया सम्भवतीति निर्विवादम्।

एवं सात्त्विकः शिष्यः सत्त्वगुणप्रवणं गुरुं यदा धर्म्मजिज्ञासयोपगच्छेत् तदा निःसंशयमेव सात्त्विकं ज्ञानरूपं फलमुत्पत्स्यते । धर्म्मः किल ज्ञानस्वरूपः सात्त्विकः पदार्थः, यदा गुरुशिष्यौ सत्त्वगुणावस्थितौ तदैव धर्म्मलाभः सम्भाव्यते; अन्यगुणाक्रान्तेभ्यो न कदापि सत्फलाशेति कथितपूर्वम् । न सा रीतिः सात्त्विकधर्म्मसमुन्नतये यया राजनीतीया, सामाजिकी, सांसारिकी वा उन्नतिर्भवति । ईश्वरराज्यभवः पदार्थो धर्म्मः, अत उपदेशका उपदेश्याश्च संसारतो वहिर्मुखीं दृष्टिं विधायेश्वरराज्यमधिगम्य धर्म्मप्रचाराय चेष्टेरंस्तदोभावपि फलभाजौ भवेताम् ।

उपरितनसन्दर्भे सिद्धान्तितं यदधुनातनी व्याख्यानशैली राजसी, परमित्थं न मन्तव्यं यदेवम्विधा सात्त्विकी शैली न भवत्येव । सत्त्वगुणमवलम्ब्य जगतामसीमदुःखैर्दयार्द्रान्तःकरणानामुपदेशेनावश्यं सात्त्विकफलोत्पत्तिः सम्भाव्यते । अखिलेषु देशेषु समाजसंस्काराय, विद्योन्नतये, धर्म्मप्रवृत्तये च प्रजाः समुत्तेजयितुं व्याख्यानमावश्यकम् । पुराणादिशास्त्राणां व्याख्यानप्रथा व्यासासनमुपविश्य धर्म्मोपदेशरीतिः सभायां स्थित्वा धर्म्मसम्बन्धीप्रश्नोत्तरप्रत्युत्तरीकरणशैली बहुतिथात् कालात् प्रवृत्ता । अधुनातनीयमुपदेशशैली तास्वेवान्तर्भवितुं योग्या । कौशलेन कार्यम्विदधता त्वरितमेव फलमाप्यते, नहि कौशलं कदापि निष्फलं भवति । जटिलग्रन्थिस्त्वरितमेव कौशलक्रियया सरलीकर्तुं शक्यते, कौशलाभावे तु साऽधिकादधिकं वक्रिमाणमेव प्राप्नोति । अतो 'धर्म्म-प्रचार' इत्यनयोरर्थं यथावज् ज्ञात्वा कौशलपूर्णक्रियया धर्म्मप्रचारे पुरुषार्थविधानेनावश्यमेव फलप्राप्तिरिति । लोकहितधर्म्मोपदेशवद्धादराः परोपकारव्रतदीक्षित-

एतज्जगदीश्वरस्वरूपमिति मत्वा लोकपूजापरायणा धर्म्मवक्तारो यदि व्याख्यानसमये भगवतः कृष्णचन्द्रस्य सात्त्विकज्ञानलक्षणरूपामुक्तिं न विस्मरेयुः, यथा——

सर्वभूतेषु येनैकं भावमव्ययमीक्ष्यते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ॥

धर्म्मस्वरूपवर्णनावसरे, उपदेश्यप्रजाभिर्व्यवहारे च भगवतो याज्ञ-वल्क्यस्योक्तिं मन्येरन्, यथा——

धर्म्मं यो बाधते धर्म्मो न स धर्म्मः कुधर्म्म तत् ।
अविरोधी तु यो धर्म्मः स धर्म्मो मुनिपुङ्गव ! ॥

तदा कृतकृत्याः सन्तः परानपि सान्द्रमानन्दयितुं शक्नुवन्ति ।

इत्युपदेशपारिजाते धर्म्मप्रचारवर्णनम् ।



# निगमागमस्वरूपम् ।

## वेदाः ।

अपौरुस्या अपौरुषेया वेदाः सनातनधर्म्मस्य मूलम् । वेदशब्द-स्यार्थो ज्ञानम् । विद्धातोः करणघञानिष्पन्नस्य वेदशब्दस्य ज्ञानकरण-स्वरूपमर्थः । ज्ञानं नित्यमतः प्रलयेऽपि ॐकारात्मना वेदस्तिष्ठत्येव । वेदा न मनुष्यैर्निर्मिता अतोऽपौरुषेया इत्यभिधीयन्ते । यथाऽऽह भग-वान्वेदव्यासः,–

अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी विद्या यतः सर्वाः प्रवृत्तयः ॥

"नैव वेदाः प्रलीयन्ते महाप्रलयेऽपी"ति मेधातिथिः ।

"प्रलयकालेऽपि सूक्ष्मरूपेण परमात्मनि वेदराशिः स्थित" इति कुल्लूकभट्टः। यद्यु वेदेषु देवाऋषयश्छन्दांसि च वर्णितानि तत्राय-मभिप्रायो यत् याभिः श्रुतिभिर्याः भगवच्छक्तय उपास्यन्ते ता एव तासां श्रुतीनां देवताः । येषाञ्च त्रिकालदर्शिनां महर्षीणां चेतःसु याः श्रुतयः प्रथममाविरभूवन्,अर्थात् यैर्महर्षिभिर्याः श्रुतयः प्रथमतः प्रकाशितास्तासां ते ऋषयः । यस्मिंश्च छन्दसि यो वेदमन्त्रो निर्दिष्टस्तदेव तस्य छन्दः । एतन्मूलकमेव प्रतिमन्त्रं ऋषयो देवाश्छन्दांसि चोल्लिख्यन्त इति वैदिकी प्रथा। एतत्प्रयोजनं किल यच्छन्दोभिर्विज्ञातैस्तन्मन्त्राधिभौतिकी-शक्तिर्विज्ञाता भवति, यतः प्रतिवैदिकच्छन्दसां शक्तिर्भिन्ना भवति । छन्दसामनुरोधेन पृथक्कार्यसम्पादनव्यवस्था ब्राह्मणग्रन्थेषु बहु समुपलभ्यते । मन्त्रदेवताज्ञानेन पूर्वाभिहितमन्त्राणामाधिदैवीशक्ति-र्देवं ऋषिज्ञानतश्च तेषामाध्यात्मिकीशक्तिर्विज्ञायते । वैदिकी किल भाषा लौकिकसंस्कृतभाषातो विलक्षणस्वरूपा । यत्र चावहितमनसा

विचारेण वैदिकभाषाया विलक्षणत्वं भावगाम्भीर्यञ्च स्फुटं प्रतीयते। आर्य्यजातीयजनविचारैस्त्वासृष्टेर्वेदसत्ता स्वीक्रियते।

युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा॥



इति स्मृतिः।

अधुनातनाः पाश्चात्या विद्वांसस्ते वैज्ञानिकविद्वांस एकस्वरेण स्वीकुर्वन्ति यद् वेदेभ्यः प्राक्तरो न कोऽपि ग्रन्थो जगत्यां दृष्टिगोचरतामापद्यत इति। अथान्तर्वैदिकविज्ञानानामनादित्वं वैदिकभाषायाश्च पुरातनतरत्वं सर्वैरेव धीरधिषणैर्विद्वद्भिरनुमोदितमिति फलितप्रायम्।

वेदेषु ज्ञानविज्ञानावत्युदारतया वर्णितौ, यदभ्रग्रहनक्षत्रादिलोकपरिमण्डितमाकाशदेशमयमघटनघटनापट्व्या महामायायाः क्रीडावनमिदं भूमण्डलं यथाऽन्तशून्यमेवं वेदस्वरूपमप्यनन्तमेव, "अनन्ता वै वेदाः" इत्याख्याः श्रुतय एवात्र प्रमाणम्। केवलमेकया ज्ञानदृष्ट्याऽस्य जगतोऽनन्तता प्रतिभाति। ज्ञानविषय इदं स्थूलरूपं जगदनन्तम्—इतोऽपि वैज्ञानिकमध्यात्मराज्यमतिविस्तृतियुतमिति सम्भाव्यते। वेदाः किल ज्ञानविज्ञानयोरधिष्ठानम्, तदा वेदात्मा शब्दब्रह्म कीदृगनन्तरूपवानिति विचारवतां प्रेक्षावतां मनस्गम्यम्। अनन्तेष्वपि वेदेषु साम्प्रतिककल्पे वेदसंख्या समुपलभ्यते, यत् ऋग्वेदस्यैकविंशतिः, यजुर्वेदस्य नवाधिकशतम्, सामवेदस्य सहस्रम्, अथर्ववेदस्य पञ्चाशत् शाखाः सन्ति। सङ्कलनया तु (११८०) अशीत्यधिकैकशतोत्तरैकसहस्रम्, यथा——

ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यकाः।
नवाधिकशतं शाखा यजुषो मारुतात्मज!॥
सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप!।
अथर्वस्य तु शाखाः स्युः पञ्चाशद्भेदतो हरे!॥

इति श्रुतिः।

...परमतिशयशोकस्थानं यद् भारते बहुविधोपद्रुत्या भारतीयाना-मज्ञानतया च इयतीष्वपि शाखासु केवलं पञ्च सप्त वा शाखाः नयन-पथयाविर्भवन्ति साम्प्रतम् । अधुनातनसर्गकल्पे यावतीषु शाखास्वपीश्वरेयो वेदो विस्तृत आसीत् तासां प्रतिशाखानुसारिषु मन्त्रब्राह्मणोपनिषद्भागेषु तद्वेदाङ्गीयसूत्रप्रातिशाख्येष्ववधानदानेन स्फुटं विज्ञातं स्यात् यत् कियत् विस्तृता वेदा आसन्निति ।

सर्वजनीनेषु वेदेषु ज्ञानीयविचारेषु सत्स्वपि वैज्ञानिकं रहस्यं गूढात्मना तिष्ठति । वैदिकभाषाऽन्तःसारा संक्षिप्ता गभीरार्था वैज्ञानिकभावोपबृंहितेति न प्राज्ञम्मन्योऽल्पधीरवगन्तुं शक्नोति ताम् । अतोऽधुनातना अदूरदर्शिविद्वांसो वेदार्थज्ञाने लुब्धा भवन्ति, तेषु च मतभेदः सन्देहः प्रमादवृत्तयश्चाविर्भवन्ति, परं शब्दब्रह्मस्वरूपो वेदो मूर्तिमत् परब्रह्म एव, यथा अजन्माऽप्यद्वितीयोऽपि परमात्मा त्रिगुणभेदवशतो विष्णुब्रह्मरुद्रस्वरूप उत्पत्तिस्थितिलयकर्म करोति, एवमपौरुषेयो वेदः कर्मोपासनाज्ञानानि विस्तारयितुं ब्राह्मणसंहितोपनिषद्रूपं मूर्तित्रयमास्थाय मानवानां श्रेयःसम्पादनाय प्रवृत्तः । मन्त्रब्राह्मणारण्यकभागेषु त्रिधा विभक्ता वेदाः, आरण्यकभागस्यैवोपनिषदित्यपरं नाम समुपलभ्यते । शरीरे उत्तमाङ्गस्येव वेदेषूपनिषदाम्महत्त्वम् । निवृत्तिमार्गगामिनां वानप्रस्थानां सन्न्यासिनाञ्चोपकारित्वादुपनिषदः सङ्गृहीताः, ते च वानप्रस्थाः सन्न्यासिनश्च प्राय आरण्यका एव, एतन्मूलक उपनिषदामारण्यकपदेन व्यवहारः प्रचलित इति । उपनिषदो मुक्तिपदप्राप्त्युपायमुपदिशन्ति प्रधानतया, मन्त्रब्राह्मणभागौ च कर्मोपासनाकाण्डयोर्मुख्यं मूलम् । एक एव वेदोऽधिकारिभेदात् कर्मभेदाच्च त्रिधा विभक्तः । स एव एको विभागक्रमेण ऋग्यजुःसामाथर्व इति चतुर्विधामाख्यां लभते । वस्तुत एक एव वेदः, यस्य त्रयो विभागाश्चत्वारश्च संज्ञा भवन्ति । ऋग्यजुःसामाथर्ववेदानां या शाखासंख्या पूर्वं परिगणिता, तावानेक

मन्त्रभागो, ब्राह्मणभाग, आरण्यकभागश्चासीत् । परन्त्वत्र कल्पे प्रकाशमापन्नानां वेदानां सहस्रांशमपि नोपलभ्यते, लीनः किल वैदिकप्रधानोंऽशः कालवैषम्यात् कालस्रोतसि, यमेधुनाऽपतिसमये लुप्ताः यशिष्टोऽपि भाग आर्यजातीयानां कल्याणाय प्रमोदाय च ।

यथा भगवतो ब्रह्मेशविराडात्मकं स्वरूपं स्वरूपतटस्थलक्षणाभ्यां वेद्यं भवति, यथा च भक्तिदर्शनीय लयपादे–"**स्वरूपतटस्थवेद्यं सच्चिदानन्दमद्वितीयम्ब्रह्म । तत्त्रिभाववत् । तस्मादेतत्सदिति निर्देशः । ब्रह्मणोऽधिदैवाधिभूतरूपं तटस्थवेद्यम् । स्वरूपेण तदध्यात्म**"मिति, तथा कार्यब्रह्मरूपं जगदपि ब्रह्माण्डपिण्डावान्तरभेदसहितं रूपत्रये विभक्तमिति श्रुतीनां दिव्यं महत्त्वं परिचीयते । कार्यकारणयोः समानरूपत्वात् कारणब्रह्मभाव इव कार्यब्रह्मणोऽपि प्रत्यङ्गमध्यात्माधिदैवाधिभूतभावाः सततं सन्निहिताः । इममेवापेतभ्रमं भगवन्नियममनुसृत्य मानवानामध्यात्माधिदैवाधिभूतशोधनाय वेदाः कर्मोपासनाज्ञानकाण्डात्मना त्रिधा विभक्ताः । एवं निखिलाः श्रुतयोऽपि त्रिभावात्मिकाः, मानवानामध्यात्माधिदैवाधिभूतशुद्धये क्षमन्ते । "**त्रयोऽर्थाः सर्ववेदेषु**"इत्यादि मध्वकृभाष्ये प्रोक्तत्वात् । विज्ञानभाष्येऽपि-

**यथा दुग्धञ्च भक्तञ्च शर्कराभिः सुमिश्रितम् ।**
**कल्पितं देवभोगाय परमान्नं सुधोपमम् ॥**
**तथा त्रैविध्यमापन्नः श्रुतिभेदः सुखात्मकः ।**
**नयते ब्राह्मणं नित्यं ब्रह्मानन्दं परात्परम् ॥**

इति ।

सर्वगतमपि परमात्मानं यथा योगेनापरिशोधितचेतसो न तं द्रष्टुं पारयन्ति, एवं साधनादिकरणैरन्तःकरणमवमृज्य विद्वांसः श्रुतीनां त्रिविधमर्थमवगन्तुं पारयेयुर्नान्यथेति ।

पूर्वे शिक्षा-कल्पो व्याकरणं ज्योतिः-श्छन्दो-निरुक्तमित्येतानि

षडङ्गानि यथावदधीत्य वेदार्थावबोधयोग्यता प्राप्यते, षडङ्गैकाङ्गस्यापि बोधाभावे न पूर्णा योग्यता लभ्यते वेदार्थावगमाय। विज्ञाय षडङ्गरहस्यं सप्तदर्शनानुशीलनमप्यपेक्ष्यते वेदार्थतत्त्वज्ञानाय । नास्माकं दर्शनानि विदेशीयदर्शनानीव कल्पितकलेवराणि—अपि तु यथाक्रमं सप्तज्ञानभूमि-प्रवेशयितृसप्ताधिकारेभ्य आविर्भूतानि । एवमधीतषडङ्गैः परिशीलित-दर्शनरहस्यैः कर्मोपासनाज्ञानादिसाधनैश्च परिमृष्टस्वान्तैर्विद्वद्भिः पूर्ण-ज्ञानात्मा वेदः समुपलभ्यते । अन्यथाऽनन्तागाधवेदराशेः पारोत्तरणन्तु दूरापेतम्, तत्र प्रवेशोऽपि दुःशकः ।

## षडङ्गानि ।

वेदानामर्थो दुर्ज्ञेयः । यथा समाधिस्थाः पुरुषा एव ब्रह्मसाक्षात्कारसुखमनुभवन्ति तथा विद्वांसः समाधियुक्तान्तःकरणेनैव शब्दब्रह्म-रूपिवेदस्य यथावदर्थमधिगन्तुमीशते ; परं योगिपदवीप्राप्तिरतिदवी-यसी । परं ते महाभागाः स्वल्पा एव, यथाऽऽह गीतोपनिषदि भगवान् कृष्णचन्द्रः—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥

इति ।

यदि वेदवाक्यमेव ज्ञानविज्ञानोपलब्धये लौकिकं मुख्यं साधनं तदा वेदावबोधनोपायः सर्वैः समादरणीयः । परं यदा दिव्यज्ञानाकरोऽयं वेदराशिस्तदैतदलौकिकज्ञानोपयिकबुद्ध्यधिगमायापाकृतो यत्नोऽपेक्षितः, अर्थात् यथा कतिचन व्याकरणग्रन्थान् काव्यकोषादींश्चाधीत्यैवान्य-संस्कृतभाषाग्रन्थाध्ययनोपयिकीं बुद्धिं लभन्ते विद्वांसः, न सा बुद्धिर्वेदार्थज्ञानाय अलम् । अधीत्यैव साङ्गोपाङ्गं षडङ्गं जिज्ञासूनां प्रतिभा वेदार्थं ज्ञातुं क्षमते । यथा परीक्षणीयस्य कस्यापि जनस्य चेष्टाप्रकृत्याकृतिगुणचरित्रादीन्विदित्वैव स परिचितो भवति, एवं वेदतात्पर्यार्थबोध-

नवमा बुद्धिस्तदैव सम्पद्येत यदा षडङ्गानि सुपरिशीलितानि भवेयुः । वेदस्य षट् अङ्गानि यथा–शिक्षा, कल्पो, व्याकरणं, ज्योति, श्छन्दो, निरुक्तञ्च इति । यथा–

छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते ।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणन्तु वेदस्य मुखं व्याकरणं स्मृतम् ॥

इति ।

शिक्षायां वेदपाठविधिरनुवर्णिता । वैदिकज्ञानावबोधाय वेदपाठः प्रथमः । अतः षडङ्गेषु शिक्षायाः प्राधान्यं मन्यते । शब्दशाब्दिकभावः वाच्यवाचकभावश्चोभावपि तादात्म्यसम्बन्धसम्बद्धाविति दर्शनशास्त्रैः सिद्धान्तितम् । परं शब्दशक्तिस्तदैव पूर्णतया प्रकाशं लभते यदा शब्दाः सम्यक् समुच्चारिता भवेयुः । इदमत्र फलितम्, यत् अलौकिकशक्तिर्वैदिकपदसमूहस्तदैव फलप्रदो यदा विज्ञानानुमोदितध्वनेः समुत्पत्तो भवेत् । वेदः शब्दस्वरूपं ब्रह्म । अत्र शिक्षायां शब्दविज्ञानक्रमभवा वेदपाठरीतिर्गानरीतिश्चोपनिबद्धा । वर्णात्मको ध्वन्यात्मकश्चेति शब्दस्य द्वौ भेदौ । अतो वेदपाठोपयोगिवर्णात्मकभागस्य शिक्षायां ह्रस्वादिभेदतो वर्णनं कृतम् । ध्वन्यात्मकशब्दस्य षड्जादिभेदैर्वर्णनं गान्धर्ववेदे प्रकाशितम् । अस्य शब्दब्रह्मणो ह्रस्वदीर्घादयो भेदास्तथा षड्जादयः सप्तस्वराश्च पूर्णरूपप्रकाशकाः । स्वरा ह्रस्वादिसाधारणभेदैस्त्रिधा, षड्जाद्यसाधारणभेदैश्च सप्तधा प्रविभक्ताः । आभ्यां साधारणासाधारणरूपाभ्यां स्वराभ्यां साधारणी असाधारणी चापि शक्तिः समुत्पद्यते ।

सामवेदीयमन्त्राणां सङ्गीतसम्बद्धत्वात् तन्महिमा सर्वाधिकः स्वीकृतः । वैदिकसाधारणशिक्षायां स्वराणां ह्रस्वादयस्त्रयो भेदाः, वेदपाठशैली, स्वरसङ्केतप्रदर्शनाय हस्तचालनादिक्रिया च वर्णिता । सामवेदीयसङ्गीतशिक्षायाञ्च ह्रस्वादिस्वरेभ्यः सप्तस्वराणामुत्पत्तिं प्रदर्श्य तेभ्यश्च मूर्च्छनादिसूक्ष्मश्रुतीनां समुद्भवमुपवर्ण्य किमपि आध्यात्मिकं

विज्ञानमाविष्कृतम् । यथा साम्प्रतं सङ्गीतशास्त्रं लौकिकप्रमोदाविर्भावकमिति मन्यते तदसाम्प्रतम्, यतो न पूज्यपादपरमर्षिसङ्कलितो गान्धर्वं उपवेदस्तादृशाय कर्मणे उपयुज्यते । इयं हि आर्य्याणां सङ्गीतविद्या मुख्यं विज्ञानशास्त्रम् । दिव्यविद्याया अस्याः साहाय्यमुपादाय वेदमन्त्राः कामपि शक्तिं प्रसुवत इतीतिहासविदां न परोक्षम् । नारदादिपरमर्षिनिर्मितशिक्षापाठेन त्रिभ्यः स्वरेभ्यः सप्त स्वराः, ततश्चैकविंशतिमूर्च्छनाः, एताभ्यश्च द्वाविंशतिश्रुतयस्ततो बहुविधा रागा आविर्भूवन्निति विदितं स्यात् । यथा सङ्गीतरत्नाकरस्य पद्यमुदाहरामः,—

श्रुतिभ्यस्तु स्वरा षड्जर्षभगान्धारमध्यमाः ।
पञ्चमो धैवतश्चाथ निषाद इति सप्त ते ॥
तेषां संज्ञाः स-रि-ग-म-प-ध-नीत्यपरामताः ।
दीप्तायता च करुणा मृदुर्मध्येति जातयः ॥
श्रुतीनां पञ्च तासाञ्च स्वरेष्वेवं व्यवस्थिताः ।
ते मन्द्रमध्यताराख्यस्थानभेदास्त्रिधा मताः ॥
त एव विकृतावस्था द्वादश प्रतिपादिताः ।

इति ।

तच्छक्तिश्च मानवचित्ते यादृशं प्रभावमुत्पादयतीति तदवलोकनत एव ज्ञायते ।

इदं मानवशरीरमपि क्षुद्रतरमेकं ब्रह्माण्डम् । सन्ति च ब्रह्माण्डे ये नियमनिचयास्त एवात्र शरीरेऽपि समुपलभ्यन्ते । इममेव सृष्टिनियममनुसृत्य शब्दसृष्टिस्त्रिगुणभेदतः प्रथमं स्थूलदशायां ह्रस्वादिभेदत्रययुक्ता भवति । ततः सूक्ष्मदशायां ब्रह्माण्डसृष्टेः सप्तभेदा इव तस्याः सप्त भेदा भवन्ति, इति भेदद्वयमनुसृत्यैव शिक्षाशास्त्रं प्रणायि पूज्याचार्य्यैः परमर्षिभिः । यदा शरीरे शब्दसृष्टिर्भवति तदा ब्रह्माण्डमर्गानुसारेणात्मप्रेरितबुद्धिमनःप्राणशक्तिप्राणवायुभिः समुत्पन्नः शब्दः

कायस्य तत्तत् स्थानविशेषं स्पृष्ट्वा प्रकाशते । यथा महर्षिपाणिनीयशिक्षायाम्—

> आत्मा बुद्ध्या समेत्यर्थान् मनोयुङ्क्ते विवक्षया ।
> मनः कायाग्निमाहन्ति स प्रेरयति मारुतम् ॥
> मारुतस्तूरसि चरन्मन्द्रं जनयति स्वरम् ।
>
> इति ।

प्रतिस्वरमात्मा सम्बद्ध इति फलितम् । परं तदैवात्मशक्तेर्विकाशः पूर्णतया सम्भवति यदा सा शब्दैः सम्यग् ध्वनिता भवेत् । कार्यप्रसक्तामधिदैवशक्तिमन्तराऽऽध्यात्मिकभावीय आधिभौतिकः स्वरो न प्रकाशमाप्नोति, किन्च पूर्वनिर्दिष्टक्रमानुसारतः सा कार्यसम्पादिन्यधिदैवशक्तिर्न सर्वत्र व्याप्ता भवेत्, अपरिणाम्य च वायुं शब्दात्मना प्रोक्ता च यदा भवेत्, तदा येन स्वरेण यच्छक्त्युत्पत्तिः सम्भाविता सा न शक्ता प्रकाशमाप्तुम् । अतः शब्दब्रह्म वेदराशिं निजरूपे स्थापयितुकामैः परमर्षिभिर्व्यधायि शिक्षाशास्त्रम् । इदानीं लौकिकीयशिक्षायथाः स्वल्पा एव लभ्यन्ते; पुरातना विस्तृतरूपा सामशिक्षा प्रायो लुप्तैवेति ।

मान्त्रिककर्मवर्णनात्मकः सन्दर्भः कल्पशास्त्रमभिधीयते । यथा यथावद्ध्वनिना अप्रकाशिता ब्रह्मस्वरूपा वेदमन्त्रा न फलजनका भवन्ति, तथा वैदिककर्मणि प्रतिक्रियं वैदिककर्मकाण्डीयविज्ञानानुमोदितसाधनमनवलम्ब्य न तत् कर्म फलोत्पादकमिति । अत्र वेदाङ्गेऽग्निसोमादियागानामुपनयनादिसंस्काराणां ब्रह्मचर्यगार्हस्थ्याद्याश्रमाणाञ्च कर्मसाधनविधिर्यथावद् वर्णितः । कर्ममयमिदं जगत्, अतो वेदेषु कर्मकाण्डाधिकारः सर्वतोऽधिकः, एतन्मूलकमेव कल्पशास्त्रं महीयः समभूल्लोके । यावतीषु शाखासु वेदा विभक्तास्तावन्त्येव कल्पशास्त्राणि पृथक् पृथक् सन्दृब्धानि । अस्य सूत्ररूपनिबद्धत्वात् कल्पसूत्रमिति व्यवहारः प्रसिध्यति । जगति प्रत्यक्षीक्रियत एव यत् मुखादुच्चारितस्य

शब्दस्य शक्तिरङ्गविक्षेपादिभिर्भावावबोधनेनैधते । अन्तर्बहिर्जगती, शब्दब्रह्मस्वरूपलक्षणौ, कार्यकारणलक्षणौ च तादात्म्यसम्बन्धसम्बलिते, अतो वैज्ञानिकयुक्तिपरीक्षितकर्मकाण्डक्रिया वेदाभिहिताध्यात्मलक्ष्यसाधनाय परमावश्यकीति फलितम् । वैदिकशाखासु या यस्य शाखा स स्वशाखानुसारिकल्पसूत्रानुमोदितकर्मानुष्ठानेनाभ्युदयं निःश्रेयसञ्च प्राप्नुयादिति कल्पशास्त्राणामाशयः । यथेदानीं सर्वाःखलारण्यको वेदोऽधिकं दुष्प्राप एवाभवत्, एवं कल्पसूत्राणां शतांशोऽपि नावशिष्यते । शिक्षा-कल्पो-व्याकरणं-निरुक्तं-छन्दो-ज्योतिरिति षडङ्गक्रमो विद्यार्थिनां शिक्षितविषयोपनिबद्धः । परं छन्दः शिक्षया, निरुक्तं व्याकरणेन, ज्योतिषं कल्पसूत्रेणात्यन्तं सम्बद्धम् ।

षडङ्गेषु क्रियासिद्धांशविचारेण शिक्षाया श्रोपपत्तिकांशविचारेण च व्याकरणस्य प्राधान्यमङ्गीक्रियते । वैज्ञानिकविचारपूर्णानि षडङ्गानि । व्याकरणं शब्दानुशासनद्वारभूतम् । अन्तर्जगद्राज्यप्रवेशाय यथा योगशास्त्रमुपायभूतम्, तद्धि भगवान् पतञ्जलिः "**अथ योगानुशासनम्**" इति वदन् प्रारेभे, तथा शब्दब्रह्मरूपस्थूलराज्कीयपदार्थानां ग्रहणाय वेदानां द्वाररूपं व्याकरणम्; स एव परमर्षिः "**अथ शब्दानुशासनम्**" इत्युक्त्वा शास्त्रमिदं प्रारभत । यथा भावो वृत्तिः प्रादुर्भावश्चेति शब्दानामुत्पत्तिक्रमः, अन्तर्जगतो बहिर्जगति शब्दे प्राविर्भवति; तदुत्पत्तिकारिणी शक्तिश्चतुर्विधा, यथा परा, पश्यन्ती, मध्यमा, वैखरी च, एवं लयोन्मुखे शाब्दिकसर्गे शब्दादर्थस्ततश्च भावः समुत्पद्यते । सर्वाङ्गसम्पन्नेयं संस्कृतभाषा नामानुरूपमेव नियमितस्वरूपा, अतः संस्कृतभाषाऽवगमाय व्याकरणाध्ययनं परमावश्यकम् । व्याकरणाध्ययनोन्मिषितशक्तिलेशेन शुद्धं लिखिताः पठिताश्च शब्दाः त्वरितमर्थं वितीर्य भावबोधने सहायतां विदधते । व्याकरणशास्त्रस्यैषोऽपरो महिमा यत् ज्योतिषशास्त्रमिवेदमपि शास्त्रं वैदिके लौकिके च कर्मणि साहाय्यं समुपहरति मानवेभ्यः । यद्यप्येतच्छास्त्रीया बहवो ग्रन्था नामशेषाः समभवन् परमधुनाऽप्यार्षग्रन्थाः समुपलभ्यन्त एव प्रायशः ।

व्याकरणाध्ययनेन शब्दार्थोऽवबुध्यते, ततो निरुक्तपरिशीलनतः भावविज्ञानेन वेदार्थरहस्यमवगम्यते । निरुक्तशास्त्रस्यान्तरिको विभागः कश्चिच्चतुष्टुरिति प्रसिध्यति, तेन च वैदिकशब्दपर्याया ज्ञायन्ते, यतो वैदिककोष इत्यपरमेतन्नाम । वर्णनविचारेण वेदे भिन्नप्रकारा भाषा दृश्यते। सृष्टेस्त्रिविधपरिणामसदृशो वेदे चाध्यात्मिकाधिदैवाधिभौतिकस्त्रिविधो वर्णितो भावः समुपलभ्यते । निरुक्तशास्त्रानुशीलनेनैतत्सर्वं यथावदधिगन्तुं शक्यते । अत्रायं निरुक्तविज्ञाननिष्कर्षः यथा व्याकरणशास्त्रं शब्दानां नित्यत्वं प्रतिपादयति तथा नैरुक्ता भावानां नित्यत्वं बोधयंति । ओंकारात्मतया वेदानां नित्यता व्याकरणविज्ञानसिद्धा, एवं निरुक्तीयोच्चतमविज्ञानेन भावमयाध्यात्मस्वरूपस्य नित्यत्वे साधिते, सुतरां ज्ञानमयवेदानां नित्यत्वं सम्यक्तम्। आरभ्य स्थूलरूपबहिर्जगतः सूक्ष्ममध्यात्मपदपर्यन्तं सर्वं जगद् भावमयम् । सृष्टेरादिमध्यावसानेषु केवलं भावप्रचुरा चेतनसत्तैवाधिकारिरूपेण तिष्ठति । अतो भावः सर्गस्य प्रभव इति स्वीकार्य एव । भावस्य प्राधान्येन शब्दद्वारा भावराज्यस्योच्चतमभूमिप्रापणमेकं परमं कर्तव्यं निरुक्तशास्त्रस्य । पुरा निरुक्तशास्त्रसम्बन्धीया बहवो ग्रन्था आसन्-बहवः किल ग्रन्थाः पूज्यपादैर्महर्षिभिर्विरचिताः, परमद्य कालकवलितानां तेषां नामापि नोपलभ्यते। शीर्णशरीरं चतुर्विंशतिमतनामकं नैरुक्तपुस्तकमुपलभ्यते कुत्रचिदपि, तदवलोकनेन निरुक्तस्यासाधारण्यं महती विस्तृतिश्चावगन्तुं शक्यते । अधुना निरुक्तशास्त्रस्य सर्वकायं यास्कनिरुक्तनाम्ना प्रसिद्धमेकं पुस्तकमुपलभ्यते, परं तत्केवलं प्रमनिरुक्तस्य छायाभूतम् ।

वेदेषु प्रथमतः समासव्यासरूपवर्णनाशैली समादृता, यतो निरुक्तशास्त्रसाहाय्यमन्तरा वेदार्थभावावबोधनं दुःसम्पादम् । 'पूज्यपादमहर्षिप्रणीतदर्शनेष्वपि कीदृशो लाघवगौरवविचारः स्वीकृत' इति भाष्यसाहाय्यमनुपादाय दार्शनिकसूत्रमनुशीलयतां विदुषां न परोक्षम् । दार्शनिकतत्त्वानां वैज्ञानिकरहस्यानाञ्च वेद आकरः, अतस्तत्र लाघवगौरव-

विचारस्याप्यस्ति परा काष्ठेति तद्विदां नात्र संशयः। एवं लाघवगौरव विचारो बहुश्रेणिषु प्रविभक्तः। एतदस्माभिर्वर्णितपूर्वं यत् त्रिभावात्मकः स विचार इति। पुनः सप्त विज्ञानात्मका भेदा, ये दर्शनशास्त्रेषु संक्षेपेणोपवर्णिताः। भवति चात्र यजुःश्रुतिः। यथा—ये ते पाशा वरुण सप्त सप्त त्रेधा तिष्ठन्ति विषिता रुशन्तः। सिनन्तु सर्वेऽनृतं वदन्तं यः सत्यवाद्यति तं सृजन्तु॥ इति। जीवास्त्रिविधभावकृतमेव दुःखं सुखञ्चानुभवन्ति क्रमशः। विज्ञानस्वरूपाः सप्त दार्शनिकज्ञानभूमय एव मुक्तिपदप्राप्तये साधकानां सप्त सोपानीभूताः। अपरोऽपि सत्त्वरजस्तमस्त्रिगुणभेदानुसारत उत्तममध्यमाधमाधिकाररहस्यकृतो भेदः श्रुतिष्ववश्यं सम्भाव्यते। यतो वेदोऽपि त्रिगुणात्मकविश्वमण्डलगतः शब्दब्रह्म एव। अङ्गीकृतमेवैतत्सर्वैर्यत् त्रयाणामपि कर्मोपासनाज्ञानकाण्डानामन्तर्योगो बहिर्योगश्चेति द्वौ भेदौ। यथा च मध्वभाष्ये—"सर्वे वेदा अन्तर्योगपरा बहिर्योगपराश्च" इति। वैदिकलाघवगौरवविचारमनुसन्धित्सवो विद्वांसो यावन्तं भावं विस्तारयेयुस्तावदेव वेदानामानन्त्यं तेषां दृष्टिपथमाविर्भविष्यतीति फलितप्रायम्। अस्य वैदिकानन्तभावराज्यस्य प्रकाशाय निरुक्तशास्त्रमसीमां योग्यतामर्हति।

विलक्षणान्तावच्छन्दःशास्त्रम्। यथा शिक्षाशास्त्रं स्वरसाहाय्येन कर्मोपासनाज्ञानकाण्डस्योपकरोति तथा छंदःशास्त्रमपि छान्दसविज्ञानसहायतयाऽऽविष्कृत्य कामपि अलौकिकीं शक्तिं वैदिकज्ञानविस्ताराय कर्मणि साफल्यसम्पादनाय च क्षमते। सिद्धसाधकरूपः सम्बन्धो ध्वन्यक्षरयोर्यथा भवति तादृशः सम्बन्धः शिक्षाछन्दसोरभ्युपेतव्यः। यद्यपि स्वरसम्वलिते ध्वनौ ध्वन्यात्मकवर्णात्मकभावौ सततं तिष्ठतः, परमन्तर्विभागस्वरूपतया सार्थके ध्वनौ छन्दसामञ्जसं स्थितिः। यथा मुखाद्विनिःसृते शब्दे स्वरस्थितिरवश्यम्भाविन्येवं छन्दांस्यपि तत्र भवन्त्येव। अत्रायं निष्कर्षो यत् स्वराणां प्रत्येकविभागविचारतो यथा मानवस्वा-

न्तेऽपरैश्चकाऽपि शक्तिः प्रकाशमाप्नोति तथा पृथक्-पृथक् स्वतन्त्रस्वरूपाणां छन्दसां प्रतिक्रियासमुत्पन्नाभिर्विशेषशक्तिभिरन्या एव काश्चिच्छक्तयः प्रादुर्भवन्ति मानवान्तःकरण इति । छन्दांसि विशेषशक्तिमन्तीति तज्ज्ञानं प्रकाशयितुं पूर्वाचार्यैः परमर्षिभिश्छन्दःशास्त्रं प्राणायि । यथा शिक्षया ह्रस्वादयः स्वरा षड्जादयो वा स्वराः, श्रुतयो, मूर्च्छनाश्च स्वस्वप्राकृतिकीं शक्तिमनुसरन्तः शान्तकरुणादीन् रसानाविर्भावयन्ति पृथक् पृथक्, तथा छन्दांस्यपि स्वस्वप्राकृतिकशक्त्या प्रकाश्यभावान् कस्मिंश्चपि वैदिके कर्मणि प्रसक्तानि भवन्ति निरन्तरम् । अत एभिश्छन्दोभिः स्वस्वशक्त्या पृथक् पृथक् कार्याणि विधीयन्ते । यथाऽऽह श्रुतिः,—"**त्रिष्टुभौ भवतः सेन्द्रियत्वाय, गायत्र्यौ स्विष्टकृतः संयाज्ये कुर्वीत तेजस्कामो ब्रह्मवर्चसकामः, तेजो वै ब्रह्मवर्चसं गायत्री, तेजस्वी ब्रह्मवर्चसी भवति य एवं विद्वान् गायत्र्यौ कुरुते, उष्णिहा वाऽऽयुष्कामः कुर्वीत, अनुष्टुभौ स्वर्गकामः कुर्वीत, द्वयोर्वाऽनुष्टुभोश्चतुःषष्ठिरक्षराणि त्रय इम ऊर्ध्वा एकविंशा लोका एकविंशत्यैकविंशत्यैवेमाँल्लोकान्रोहति स्वर्ग एव लोके चतुःषष्ठितमेन प्रतितिष्ठति**" इति । उपरि निर्दिष्टानि सप्त च्छन्दांसि दर्शनानुमोदितप्राकृतिकपरिणामस्य मूलभूतानि । तत्र विचारेण वैदिकच्छन्दसां मूलतत्त्वं विज्ञातं स्यात् । साधकानामुद्देश्यः स्वर्गः, लौकिकभोगः, मोक्षपदप्राप्तिर्वा भवेत् परं छन्दोविज्ञानप्रचुरा वैदिकमन्त्रा यथावदुपयुक्ताश्चेत् तदाऽवश्यमेव कर्मणि साफल्यलाभः स्यादित्यपेतसंशयम् । वैदिकानुष्ठानादिषु च्छन्दसां प्राधान्येनेदमपरं तस्य माहात्म्यवैचित्र्यञ्च प्रतिभाति यददृष्टफलसम्पादकानां मन्त्राणां शक्तये साहाय्यं प्रदत्ते च्छन्दःशास्त्रमिति । अनन्ता तावत् प्रकृतिः, अतश्छन्दःशास्त्रमप्यनन्तम् । छन्दःशास्त्रप्रवक्तारो महर्षयो जीवोपकाराय प्रधानानि च्छन्दांसि नियमबद्धानि विधाय प्रकाशयामासुः । एतच्छास्त्रयुग्याः

प्रायो लोपमाप्ताः, स्वल्पएवावशिष्टोऽस्य छन्दःशास्त्रस्य भागः समुपलभ्यते, ब्राह्मणादिग्रन्थेष्वप्येतच्छास्त्रवर्णनं कुत्रचिदुपलभ्यते ।

समष्टिव्यष्टिरूपतो ब्रह्माण्डरूपमिदं जगत् पिण्डरूपो मनुष्यदेहश्च परस्परमेकत्वसम्बन्धसम्बद्धे । वर्णितञ्चैतत् धर्मशास्त्रादिग्रन्थेषु यत् ब्रह्माण्डे यानि देवताभूतग्रहनक्षत्राणि तानि देहेऽपि सन्ति । यथाऽऽह भगवान् योगी याज्ञवल्क्यः—

त्रैलोक्ये यानि भूतानि तानि सर्वाणि देहतः ।
समष्टिव्यष्टिरूपेण ब्रह्माण्डः पिण्ड उच्यते ॥

इति ।

देहेऽस्मिन्वर्तते मेरुः सप्तद्वीपसमन्वितः ।
सरितः सागराः शैलाः क्षेत्राणि क्षेत्रपालकाः ॥
ऋषयो मुनयः सर्वे नक्षत्राणि ग्रहास्तथा ।
पुण्यतीर्थानि पीठानि वर्तन्ते पीठदेवताः ॥
सृष्टिसंहारकर्त्तारौ भ्रमन्तौ शशिभास्करौ ।
नभो वायुश्च वन्हिश्च जलं पृथ्वी तथैव च ॥
त्रैलोक्ये यानि भूतानि तानि सर्वाणि देहतः ।
मेरुं संवेष्ठ्य सर्वत्र व्यवहारः प्रवर्तते ॥

इति शिवसंहितायाम् ।

मनुष्यः किलानन्ताकाशव्यापकस्य सौर्य्यजगतः क्षुद्रतरः प्रतिकृतिस्वरूपः । एवं सौर्यजगतासहैदृशाभेदतया मानवशरीरे तत्प्रभावेण तदनुसारि परिवर्तनमपि सम्भाव्यते । यथा प्राकृतिकान्ताराज्यसम्बन्धिनी मूलशक्तिर्जडचेतनभागतया द्विधा विभक्ता, तथैव तदीया बाह्यशक्तिरपि समविषमरूपेण द्विधैव विभक्ता । अनयैव द्विविधया समविषमरूपया विद्युच्छक्त्या कार्याणि स्वतन्त्रतया भवन्ति, एकया च समाकर्षणक्रिया ऽपरया च विक्षेपणक्रिया निष्पाद्यते । अस्य विज्ञानस्येदं रहस्यं यद् यथा मनुष्याणां हृदि शक्तिभ्यामाभ्यामेतत्कृताकर्षणविक्षेपणाभ्यां

तत्सहायभूतमानसिकप्रवृत्त्या च मानवानामान्तरिकवृत्तिः परिवर्त्यते, तथा समष्टिरूपब्रह्माण्डशक्त्याऽत्र बहिर्जगति सृष्टिस्थितिलयात्मकमनेकविधं परिवर्त्तनं विधीयते । यथा च मनुष्याणामन्तःकरणे एताः शक्तयस्तथैव सूर्यचन्द्रग्रहनक्षत्रेष्वपि विद्यन्ते । यथैवम्विधस्तच्छक्तिप्रभावस्तानाक्रम्य तिष्ठति तथा तच्छक्तिविस्तारान्तःपातिनो ग्रहनक्षत्रादीन् ग्रहनक्षत्रवासिजीवाँश्चाप्यभिव्याप्य तिष्ठतीतिविज्ञानमिममनुसृत्यैव प्रत्यक्षसिद्धगणितज्योतिषस्याप्रत्यक्षसिद्धफलितज्योतिषेण सह युक्तिविज्ञानसिद्धस्तादात्म्यसम्बन्धोऽङ्गीक्रियते ।

गणितं फलितञ्चैव ज्योतिषन्तु द्विधा मतम् ।

इति सूर्यसिद्धान्तः ।

पुरा भारतेऽत्र वर्षे दिव्यमिदं विज्ञानमुन्नतेः परां काष्ठामारूढम् तथा पूज्यपादारविन्दा अनेके महर्षयोऽस्य दिव्यशास्त्रस्याचार्याः समभवन् । येषां निर्मिताः कतिपय संहिता अपि समुपलभ्यन्ते । ज्योतिषाचार्याणां गणना यथा सूर्यसिद्धान्ते—

सूर्यः पितामहो व्यासो वशिष्ठात्रिपराशराः ।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः ॥
लोमशः पैलिशश्चैव च्यवनो यवनो गुरुः ।
शौनकोऽष्टादश ह्येते ज्योतिःशास्त्रप्रवर्तकाः ॥

इति ।

अपरवेदाङ्गापेक्षयाऽस्य ज्योतिःशास्त्रस्य महती विस्तृतिः परमावश्यकत्वञ्च षडङ्गमुपवर्णयद्भिर्महाभागैः परमर्षिभिरभिहितम् । यथा षडङ्गज्योतिषे—

यथा शिखा मयूराणां नागानां मणयो यथा ।
तद्वद्वेदाङ्गशास्त्राणां ज्योतिषं मूर्द्धनि स्थितम् ॥
वेदा हि यज्ञार्थमभिप्रवृत्ताः ।
कालानुपूर्वा विहिताश्च यज्ञाः ॥

तस्मादिदं कालविधानशास्त्रं ।
यो ज्योतिषं वेद स वेद यज्ञान् ॥
इति ।

सृष्टेर्मूलकारणं जगदुत्पादकं ब्रह्म सर्गमतीत्य तिष्ठति, परं कार्यब्रह्मरूपमिदं ब्रह्माण्डं कालेन सावच्छिन्नम् । कर्म साक्षात् कालसम्बद्धमिति कर्मणः कालाधीनत्वमभ्युपगन्तव्यमतो विज्ञातकालेनैवोपक्रान्तस्य कर्मणः सिद्धिराशास्यते । ज्योतिःशास्त्रस्य पूर्वाङ्गभूतं गणितं कालस्वरूपमभिधत्ते, तयोत्तराङ्गं फलितञ्च तदन्तर्गतरहस्यानि प्रकाशयति । अतो वैदिककर्मकाण्डस्य ज्योतिःशास्त्रेणातिनिकटः सम्बन्धो मन्यते । कर्मणः कालाधीनत्वं कालस्य च ज्योतिःशास्त्रनिर्णेयत्वमिति सुसम्बद्धं कर्मकाण्डस्य ज्योतिःशास्त्राधीनत्वम् । ज्योतिःशास्त्रस्यावनतिरेवार्यजातीयानां सदाचारकर्मकाण्डह्रासमूलम् । गणितज्योतिःशास्त्रे या खगोलगता ग्रहनक्षत्रादीनां परिवर्त्तनादिक्रिया कालविभागश्च निर्णीयते, फलितेन च ग्रहादीनां गतिसाहाय्यमुपादाय जगतः सांसारिकाणां सृष्टेर्मनुष्याणाञ्चाऽभ्यन्तरपरिवर्त्तनादि विज्ञायते । ज्योतिःशास्त्रस्येमेऽङ्गे मानवान् बहूपकुरुतः । एतच्छास्त्रीयग्रन्थेष्वस्यावश्यकत्वं सर्वजनीनत्वमपरवेदाङ्गापेक्षया प्राधान्यञ्चोपवर्णितं, तदत्र विचारशीलानामन्तःकरणे नात्युक्तित्वेनावभासेत । लुप्तास्तावदिदानीं ज्योतिःशास्त्रस्य ग्रन्थगौरवतया आर्षा ग्रन्थाः । यद्यप्यपरवेदाङ्गापेक्षया मण्डयन्ति बहवो ग्रन्था इदं वेदाङ्गं, परं लुप्तानि बहूनि सिद्धान्तग्रन्थरत्नानि । न चाधुनाऽपि संस्कारादिभिः समुज्जीवितमिदं शास्त्रम् । शास्त्रस्यास्याधिभौतिकसृष्टिसम्बन्धतया प्रकृतेस्त्रैगुण्यक्रमेणानुसारं ग्रहगतिपरिवर्त्तो विज्ञायते । वत्सराणां प्रतिशतं ग्रहनक्षत्रादीनां गतिभेदः समुपलभ्यते । शोधयितुमिमं दोषमुपायद्वयम्, अध्यात्मदृशा समीक्ष्य तत्त्वतः सङ्कलनम् यद्योगदर्शनीयतृतीयपादे समुपवर्णितम्, अन्यच्च दूरवीक्षणादियन्त्रद्वारा समीक्ष्य ग्रहाणां गतिभेदं ज्योतिःशास्त्रं संस्कर्तव्यम् । नावशिष्यते साम्प्रतं योगशैली

यथा संस्कर्तव्यं स्यात् । पुरा ज्योतिःशास्त्रमत्रैव भारते आर्य्यजातावेव च समुद्भूतमिति कोऽत्र संशयः यतो वेदाङ्गमिदं, भारतवर्षादेवेदं शास्त्रं विस्तृतिमलभत, अधुनात्वध्यवसायिपाश्चात्या विशेषामुन्नतिमसाधयन् । यन्त्रनिर्मितौ दूक्साहाय्यमुपादाय गणितज्योतिषसंस्कारे च प्रोन्नताः पाश्चात्याः साम्प्रतम्, तेषां गणनाऽपि सफला प्रतिभाति । आर्य्यजातीया दुर्दैवहता नानाविपत्युपप्लुता अत एव तैर्न संस्कृता गणितज्योतिःसारणी बहुतिथात् कालात् । अत्र भारते यन्त्रालयनिर्माणपुरस्सरं प्रत्नज्योतिषग्रन्थानां पश्चिमीयनव्यदृग्गणितशैलीनाञ्च साहाय्यमुपादायैतच्छास्त्राभ्युदयाय कृतो यत्नः सफलतां प्राप्स्यति ।

## सप्त दर्शनानि ।

यथा बाह्यजगतामुन्नतेः/शिल्पोन्नतिः प्रथममारोहणवर्त्म मन्यते तथाऽन्तर्विश्वस्य समुन्नतेर्दार्शनिकोन्नतिर्विज्ञायते । शिल्पकलादिवृद्धी राजसिकबुद्धिपरिचायिका, तथा सात्त्विकबुद्धिविकाशो दार्शनिकसमुन्नत्या परिचीयते । अत्र धरातले याः जातयो ज्ञानाभ्युदये पूर्वा अभवन्, तद्दार्शनिकज्ञानविजृम्भितम्, यथा प्रत्नेषु आरबमिश्ररोमनजातीयेषु नूत्नेष्वपि यूरोपामेरिकेयनजातीयेषु ज्ञानपरिणत्यनुसारं विकशितं दार्शनिकज्ञानज्योतिषा यथासम्भवम् । आर्यजातिषु दार्शनिकज्ञानाविर्भूतिं कोनु जातीयान्तरदर्शनज्ञानोदयेन तुलयेत् । चिरन्तनार्यदर्शनज्ञानवतां नव्यजातीयदर्शनविदुषाञ्चैतन्न परोक्षं यत् साम्प्रतिकजातीया दार्शनिका बालका इव वृद्धगुरोर्भारतस्य सामीप्यमेत्य प्रतिभान्तीति । उभे शक्ती जगत्यस्मिन् प्रतीयेते, एका जडरूपाऽपरा च चेतनाऽभिधा, एका भौतिकशक्तिरन्या च जीवनशक्तिः, एका प्रकृत्यात्मिकाऽपरा पुरुषरूपिणी, जडशक्तिरिन्द्रियग्राह्या स्थूलस्वरूपा च, इन्द्रियातीता च सा चेतनशक्तिः सूक्ष्मशरीरा । जडशक्तिविकाश आजगत्सृष्टिविस्तारम्, चेतनशक्तेश्चेतः

परम् । साधारणरूपेणैवानुभूयते जडशक्तिर्जनैः, परं चेतनशक्तिस्तु समुल्लङ्घितजडशक्तिराज्यैरेवानुभवितुं शक्यते केवलम् । अर्वाञ्चो विद्वांसो यावन्ति दर्शनशास्त्राणि प्रकाशमापादयन्ति तानि जडजगद्ज्ञानानुविद्धानि, यद्यपि जडजगत्पदार्थमार्गणे सफलमनोरथास्ते जाताः परं चिद्रूपं जगच तेषां दृष्टिपथमपीदानीमाविर्भूतम् । अभिनवा विपश्चितो जडराज्यरहस्यं समध्यगच्छन् परं नैतद् ज्ञातुं प्राभवंस्ते यदतिरिच्यते वा कश्चिज्जडराज्यतश्चेतनभावो नवेति । यदैते प्रकृतिराज्ये भ्रमन्ति, प्रकृतिरेव सर्वमिति चावगच्छन्ति, अधुनाऽपि तेषां हृदयं न पुरुषज्ञानेन पावितमल्पमपि,साम्प्रतमपि जीवपुरुषेश्वरब्रह्मभावानां चेतनविश्वसम्बद्धानां न कोऽपि भावस्तैरनुमातुमपि पार्यते, इदानीमपि नव्यदार्शनिका जडजगन्मायाराज्ये एव वंभ्रम्यन्ते, जडादन्यश्चेतनस्यात्मनोऽस्तित्वे ते अन्धायमाना मुह्यन्ति, तदाऽवश्यमेवैतत् अद्वैयपदवीमनुप्रविशति यत् बालकास्ते साम्प्रतं दार्शनिकज्ञाने इति । अन्तर्जागतिकविचारमहाब्धिं कूलद्वये मण्डयतः शृणु जगदिदमेकं तस्य कूलं अपरञ्च ब्रह्मसद्भावापरपर्यायं निर्वाणपदम् । प्रथमं विचारमहाब्धेः कूलं जगदिन्द्रियैः प्रत्यक्षीभूतम्, अन्यच्च ब्रह्मपदमिन्द्रियप्रत्यक्षानवबोधम् । अभिनवास्ते दार्शनिकाः प्रथमकूलभवं ज्ञानमासाद्य कतिचन पदानि ज्ञानमहाम्भोनिधिमवतीर्णाः परमस्य ज्ञाननीरनिधेः पारेतलं ब्रह्मपदमवलोकितुमनीशाः परावृत्य पश्यन्ति, विचिन्तयन्ति च निजानवबोधनिमित्तं यत् पूर्वकूलप्रतीकाशमेवास्योत्तरकूलवर्त्ति प्रत्यक्षयास्यं जगदेवेति । यतस्ते ज्ञानाम्भोनिधेरेककूलरहस्यमेव जानन्त्यतो भ्रान्ता इव ज्ञानसागरे भ्रमन्ति, जड़प्रकृतितो नातिरिच्यते जगति किमपीति प्रत्ययञ्च गच्छन्ति । अत्र च कारणं प्रधानतयैतत्प्रतीमो यदार्यजातिषु दार्शनिकं ज्ञानं यथा प्रकाशतामुपगतं न तथा नव्यजातीयेष्विति । अत्रायमार्य्याणामन्तर्दृष्टिप्राप्तिक्रमो यत् वर्णश्रेष्ठ्या ब्राह्मणाः स्वधर्मं पालयन्तः शुद्धस्वान्ता निरस्य बाह्यविषयादीन् निवृत्तिसरणिमनुसरन्तो योगयुक्ता भवन्ति । ते च योगिनोऽध्यात्मदृशा परितोऽवलोक्य यद्दर्शनसिद्धान्तं प्रकाशमापाद-

यन्ति तदशान्तमेवेति निश्चितम्। नैमामार्य्यजनतुरथां सरणिमनुसर्तुं पारयन्ति मनागपि नव्याः । ते तु केवलं लौकिकबुद्ध्याऽनुसन्दधन्तो बाह्यज्ञानेनैवान्तरिकज्ञानमाप्तुं यतन्त्यतो न सम्भाव्यते तत्रत्य दार्शनिकेषु अमितिज्ञानप्रकाशः ।

सनातनधर्म्मविज्ञानानुकूलं यथाऽधःपातुकदशा जीवानां सप्ता-ज्ञानरूपभेदे व्यभाजिषत पूर्वाचार्य्यैः तथा साधकानां क्रमोन्नतिरपि सप्तज्ञानभूमिरूपे भेदे परिणामिता । आध्यात्मिकसमुन्नतेः सन्ति सप्तक्रमाः ।

सप्तानां ज्ञानभूमीनां साधकस्याखिलस्य वै ।
भेदाद्विरोध इत्येवं दर्शनेषु प्रतीयते ॥

इति भगवान्वेदव्यासो दर्शनानां परस्परं विरुद्धवत्प्रतीयमानानां विरोधपरिहारं वदन् द्रढयति ज्ञानभूमेः सप्तविधत्वम् । भगवता मह-र्षिवशिष्ठेनापि प्रतिपादितं सप्तज्ञानभूमेर्नाम लक्षणञ्च योगवाशिष्ठादि-ग्रन्थेषु विस्तरतः । तदनुसारमेव दर्शनानि विभाजितानि सप्तधा पूज्य-चरणैर्महर्षिप्रवरैः । पुनश्च सप्तदर्शनानि त्रिभावे त्रिधा विभक्तानि । यथा न्यायदर्शनवैशेषिकदर्शने पदार्थनिरूपणपरे । साङ्ख्ययोगौ च साङ्ख्यप्रवचनपरौ । कर्म्ममीमांसा, भक्तिमीमांसा, ब्रह्ममीमांसेति तिस्रो मीमांसा वैदिककाण्डत्रयानुसारं मीमांसादर्शनमित्यभिधीयन्ते । एत-त्सप्तदर्शनाचार्य्याणां नामानि प्रभूतानि श्रूयन्ते । परमधुनोपलब्धवि-षयन्यायाचार्य्याणां नामानि निर्दिश्यन्ते । यथा गौतमः कणादः पतञ्जलिः याज्ञवल्क्यः बृहस्पतिः कपिलो भरद्वाजो जैमिनिरङ्गिराः शाण्डिल्यो व्यासो वशिष्ठश्चेत्याद्याः । नातिरिच्यते दर्शनसप्तकतोऽन्यद्दर्शनं यदार्यैः स्वीकृतं स्यात्, यानिचान्यानि श्रूयन्ते दृश्यन्ते वाऽऽर्य्याणां दर्शनानि तान्यत्रैवान्तर्भवन्ति ।

सप्तस्वेषु पदार्थनिरूपणपरं न्यायदर्शनं प्रथममधिक्रियते,

न्यायदर्शनेहि षोडश पदार्थाः स्वीकृतास्ते च तत्त्वतो विज्ञाता ईश्वरज्ञानाय निःश्रेयसाधिगमाय च जायन्ते यथा च तत्सूत्रम्—"**प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगम**" इति। न्यायदर्शनस्येदमपरं माहात्म्यं यत् जिज्ञासूँस्तच्छास्त्रं वादशिक्षणसाहाय्येन ज्ञानानुसन्धानयोग्यान् विदधाति। वैशेषिकदर्शनं षट्पदार्थानङ्गीकरोति यथा"**धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्**" दर्शनमिदं धर्माधर्मनिर्णयसाहाय्यमधिकं विधत्ते। उभेऽपि दर्शने इमे परमाणोर्नित्यत्वमवगच्छतः, संसारम्प्रति ईश्वरस्य निमित्तकारणताञ्चाङ्गीकुरुतः। वस्तुत उभेऽपि दर्शने पदार्थनिरूपणपरे, दर्शनान्तरावबोधने च विशेषमुपकुरुतः। एतच्छास्त्रीया बहवो नूत्ना ग्रन्था निरमायिषताभिनवैः; ये नव्यन्यायनाम्ना प्रसिध्यन्ति। यद्यपि नव्यन्यायस्य नोपकारित्वमस्ति धर्माधर्मनिर्णये, तत्त्वार्थावगमे, दर्शनान्तरप्रवेशे च; परं जल्पवितण्डासाहाय्येन स्वपक्षस्थापने, परपक्षनिरसने, विजयप्राप्तौ, जगत्यात्मनो वाग्मित्वप्रदर्शने च सहायतां समधिकं प्रदत्ते। व्याकृतं जल्पवितण्डयोः स्वरूपं न्यायदर्शने यथा—"**यथोक्तोपपन्नच्छलजातिनिग्रहस्थानसाधनोपालम्भोजल्पः, सप्रतिपक्षस्थापनाहीनो वितण्डा**"। अपरमप्येतदवधेयमत्र '**तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहणार्थं कण्टकशाखावरणवत्**"। न्यायदर्शनवैशेषिकदर्शने शिक्षितव्ये मुख्यत आर्षग्रन्थानामेव शिक्षा समुचिता, नव्यन्यायस्य तु गौणतः। इदानीं भारतवर्षीयकतिचिद्देशेषु या नव्यन्यायशिक्षासरणिर्वितता न साऽऽध्यात्मिकसमुन्नतये इतीमामेव भित्तिमधिष्ठाय न्यायदर्शनशिक्षाप्रणाली संस्कर्तव्या।

प्रकृतिपुरुषजः सर्ग इति साङ्ख्यदर्शनस्य मतम्। प्रकृतिपुरुषौ च

नित्यानित्यङ्गीकरोति । अत्र चतुर्विंशतिस्तत्त्वानि स्वीक्रियन्ते । तद्यथा मूलप्रकृतिः, महत्तत्त्वं, अहन्तत्त्वं, मनः, पञ्च तन्मात्राणि, पञ्च ज्ञानेन्द्रियाणि, पञ्च भूतानि, पञ्च कर्म्मेन्द्रियाणीति। एभ्योऽतिरिच्यते पञ्चविंशस्तत्त्वं पुरुषः । निःसङ्गः पुरुषः अपरिणामशीलो ज्ञानमयश्च, प्रकृतिर्हि त्रिगुणमयी परिणामात्मिका सङ्गवती च। अत्र दर्शन इत्थं मुक्तिपदप्राप्तिर्निर्धारिता यः पुरुषो यदा प्रकृतिं परिचिनोति तदाध्यात्माधिदैवाधिभूतरूपं त्रिविधं दुःखमपहाय मुक्तिं विन्दते जीवः । अत्र चासङ्ख्याताः पुरुषाः समाम्नाताः । तत्त्वज्ञानेन मुक्तिपदमधिगच्छति पुरुषः । तदीया प्रकृतिश्च मूलप्रकृतौ लीयते । एतदेव प्रकृतेः पुरुषस्य वा मुक्तिरभिधीयते। इदमस्य दर्शनस्य वैलक्षण्यम्, यत् पूर्णतया वेदमनुगच्छति, परमेतत्त्वमभिधत्ते यत्मम ज्ञानभूम्यनुकूलतो नेश्वरः सिद्ध्यति । अतः केऽपि साङ्ख्यदर्शनं निरीश्वरं योगदर्शनञ्च सेश्वरमिति वदन्ति । अनयैव वर्णनविलक्षणतया बौद्धजैनादयो निरीश्वरवादिनः संवृत्ता भ्रममासाद्य । परं नेदं दर्शनं निरीश्वरं, यतोऽस्य मते कूटस्थदशायां शरीर एव मुच्यते जीवः । न तत्र दशायां व्यापिका चेतनसत्ताऽनुमातुं शक्येत्यतः स्वदार्शनिकविज्ञानदृढिमानमापादयितुं तथोक्तं न वस्तुत ईश्वरखण्डनसमीहया । ज्ञानवृद्धौ सहायकमिदं दर्शनम् । यद्यप्येतदीयग्रन्थाः स्मर्तव्यतां गतास्तथापि कतिचन आवश्यकीयाः समुपलभ्यन्त एव ।

विचित्र एव योगदर्शनमार्गः, योगदर्शनं हि श्लाघ्यतमं योगानुशासनस्य निर्णायकम्, दर्शनेभ्योऽविरुद्धं, सर्वैश्च प्रशंस्यं, तिसृणां मीमांसानां मूलञ्च । अस्य दर्शनस्येदं वैचित्र्यं यत् दृष्टादृष्टरूपं द्विविधं कर्म्म मन्यते । यद्यपि दर्शनान्तरैर्बहुकर्म्मभेदः स्वीक्रियते, परं योगदर्शनस्यायं दृढः सिद्धान्तो यत् योगिनां पुरुषकारेण दृष्टकर्म अदृष्टकर्म भवति, अदृष्टकर्म च दृष्टकर्म । योगदर्शनस्य विज्ञानं साङ्ख्यवेदान्तदर्शनयोर्विज्ञानेनाविरुद्धम्, क्रियासिद्धांशे चोभयोः सहायकम् । योगविज्ञानानुसारेण चित्तवृत्तिनिरोधात्स्वस्वरूपं विकशति तेन मुक्तिर्भवति । साध-

नवैराग्याभ्यां चित्तवृत्तिर्निरुध्यते । साधनस्य प्रधानतोऽष्टावङ्गानि, यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इति । एभ्योऽपरेऽपि चित्तवृत्तिनिरोधनपुरस्सरं मुक्तिपदप्राप्त्यैयनेोपाया बहवो निर्दिष्टाः येष्वीश्वरप्रणिधानंमुख्यम् । अत्र सिद्धयोऽपि वर्णिताः । असाधारणविभूतियुक्तमिदं दर्शनम् । अन्तर्मुखीणवृत्तिमन्तरा नकोऽपि जनोऽध्येतुमध्यापयितुं वा प्रभवति यथावदिदं दर्शनम् । अस्य दर्शनस्य बहवः सूत्रकारा अभवन् । अधुनाऽपि महर्षिपतञ्जलिकृतं योगसूत्रमुपलभ्यते यदलङ्करोति व्यासकृतं भाष्यम् ।

अखिलदर्शनतः कर्म्ममीमांसादर्शनमतिविततम् । वेदकर्म्मकाण्डमेव ज्ञानोपासनाकाण्डाभ्यां विस्तृतम् । इयं सृष्टिक्रिया धर्ममूलिका, अनन्तञ्च कर्म्मणो वैलक्षण्यमिति युक्तमेव कर्म्ममीमांसादर्शनेन विस्तृतकायता । अधुना केवलं महर्षिजैमिनिकृतग्रन्थ एक उपलभ्यते यत्र कर्म्मकाण्डविषयो मुख्यतया वर्णितः । पुरा बहवः कर्म्ममीमांसाग्रन्था आसन् । कर्म्मविज्ञानम्, संस्कारविज्ञानम्, कर्म्मभेदः, सृष्टिविज्ञानम्, कर्म्मयोगविज्ञानम्, जीवन्मुक्तितत्त्वम्, वर्णाश्रमधर्म्मविज्ञानम्, लोकान्तरविज्ञानम्, शरीरविज्ञानम्, जन्मान्तरवादविज्ञानम्, सूर्य्याचन्द्रगतिविज्ञानम्, पापपुण्यविज्ञानम्, विहितकर्म्मविज्ञानमित्यादीनि कर्म्मरहस्यपूर्णानि दार्शनिकतत्त्वानि दर्शनेऽस्मिन्नन्तर्भूतानि । अधुनोपलभ्यमानानां ग्रन्थानामपूर्णतया नात्र सर्वे विषयाः समुपलभ्यन्ते । परं नित्यनैमित्तिककाम्यकर्म्मणां रहस्यं वैदिककर्म्मकाण्डीयोपपत्तिकमंशश्चावाप्यते । अत्रावश्यं परमो यत्नो विधेयो यथा दर्शनस्यास्याप्रकाशिता लुप्ताश्च ग्रंथाः प्रकाशमाप्नुयुः ।

उपासनाकाण्डसहायभूता भक्तिमीमांसा सहूपकरोत्युभे मीमांसे यत्र दर्शने भगवान् रसस्वरूपो भक्त्या च मुक्तिरुत्पद्यत इति मन्यते । अस्मिन्दर्शने भक्तेर्लक्षणं, तद्भेदः पराभक्तिब्रह्मसद्भावयो-

रैक्यम्, अध्यात्माधिदैवाधिभूतरहस्यम्, देवर्षिपितॄणां स्वरूपनिरूपणम्, तेषां नित्यत्वकथनञ्च, ईश्वरादेवर्णीनाञ्चावतरणम्, भगवद्भक्तिमाहात्म्यम्, अध्यात्माधिदैवाधिभूतसृष्टेर्भेदः, सृष्टिस्थितिलयक्रम, उपासनाविधिः, प्रवृत्तिनिवृत्तिवर्त्म, ब्रह्मप्रकृत्योरभेदावस्थापनम्, देवर्षिपितॄणां तृप्त्युपायः, यज्ञमहायज्ञयोर्भेदः, त्रिविधसमर्पणम्, सप्तविधध्यानम्, वैदिककाण्डत्रयानुकूलं मुक्तेरनुभवत्रयम्, इत्यादयोऽनेके वेदान्तिकरहस्याः समुपवर्णिताः । पुराऽस्य दर्शनस्याचार्या बहवो विश्रान्तेस्म, परमधुना नैकोऽपि सिद्धान्तग्रन्थो यथावदुपलभ्यतेऽस्य दर्शनस्य । अधुनैतन्निषेधो यत्नः परमावश्यको येनाप्रकाशिता लुप्ताश्च ग्रन्थाः समुपलभ्येरन् । त्रयाणां मीमांसादर्शनानां सहैवाध्यापनं श्रेयस्करं भविष्यति ।

प्रोक्तता किल वेदान्तदर्शनस्य ज्ञानभूमिः, एतदान्वितस्य ज्ञानभूमेर्मर्हत्वं निर्णीयते । अस्य मते जगदिदमनित्यं मायाकल्पितञ्चाङ्गीक्रियते। सोपाधिका भावाः सर्वे मुधा भूता इति वेदान्तदर्शनस्य मतम् । कार्य्यब्रह्मब्रह्माण्डस्याति ब्रह्मणा उपादानकारणता सुवर्णवलयमिव प्रतीयते । यथोपलस्तम्भे खचिता मूर्त्तिस्ततो नातिरिच्यते तथा जगद् ब्रह्मणोऽभिन्नस्वरूपम् । रज्जौ सर्पभ्रम इव शुक्तिकायां रजतभ्रम इव मरीचिकायां जलभ्रम इव मायया ब्रह्मणि जगद्भ्रम इति वेदान्तदर्शनमभिप्रैति । वस्तुतोऽद्वितीयं सर्वव्यापकमविकारि सच्चिदानन्दस्वरूपं ब्रह्म एव, ततो नातिरिच्यतेऽपरं किमपि वस्तु । इदमेवोपनिषदां मूलतत्त्वम् । इदमेव सर्वदर्शनैः प्राप्यं स्थानम् । अयमेव जीवन्मुक्तानामनुभूतो भावः ।

दर्शनमीक्षणमभिधीयते, तदिदमपि दर्शनं मुमुक्षूणामीक्षणभूतम् । एकदर्शनाध्ययनेन पूर्णज्ञानप्राप्तिर्न सम्भाविता, अतः सप्तदर्शनानामवबोधनं परमावश्यकम् । अधुना प्रथमं पुस्तकान्येव दुर्लभतराणि

सम्वृत्तानि, परं यानि तूपलभ्यन्ते तेषामध्यापनमपि सम्यक्रीत्या यथाक्रमं न भवति यतो वैदिकविज्ञानबोधोऽसम्भव इव प्रतीयते । किञ्च दार्शनिकज्ञानमपि नावगम्यत इति पुराणतन्त्रादिरहस्यं नावबुध्यते । अतोऽध्येतव्यानि प्रचारणीयानि च सषडङ्गानि दर्शनानि । पूर्वाभिहितसन्दर्भमवलोक्य सन्दिहानाः केऽपि परस्परं विरुद्धानि दर्शनानीति वदन्ति । परं तदज्ञानविलसितमेव, यतो विरोधः किल ज्ञानभूमितारतम्यतोऽवभासते ।

मानेक्ष्यङ्घ्रि कणादवाक् कपिलवाक् त्वं शब्दवाच्ये तदो
घाच्ये शण्डिलजादिवाक् फणिवचस्तात्पर्यवडीग्रहे ।
मीमांसामतिशोधिकर्म्मनिचये वेदान्तशास्त्रोक्तय
स्तत्त्वं लक्ष्यविनिर्णयेऽनभिमते का वा विरोधे क्षतिः ॥

इति सुष्ठूक्तं श्रीमता मधुसूदनसरस्वत्या दार्शनिकज्ञानतत्त्वज्ञेन ।

## उपवेदाः ।

परमकारुणिकस्य भगवतः कृपा यथा जीवान् दिव्येन साहाय्येन योजयितुं समाधिपूतात्मनां महर्षीणां हृदि अपौरुषेयं वेदमाविर्भावयामास एवं महर्षयोऽपि जीवान् लौकिकसाहाय्येनोपकर्त्तुकामाः पदार्थविद्याशिल्पशास्त्रकलादियन्त्रान् निर्ममुः, तैश्च महाभागैस्ते ग्रन्था व्यभाजिषत चतुर्धा, ते चेदानीमुपवेदनाम्ना व्यवह्रियन्ते, यथा—

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः ।
स्थापत्यवेदमपरमुपवेदश्चतुर्विधः ॥

इति ।

यथा लौकिकपुरुषार्थकारित्वं योगसाधनासक्तत्वमुपासनाप्रवणत्वं वैदिककर्म्मपारतन्त्र्यञ्चालौकिकमुक्तिपदोपलब्धौ परम्परया साहाय्यं कुर्वते, यथा सर्वः किल लौकिकः पारलौकिकश्चाभ्युदयो निःश्रेयसाय परम्परया जायते, यथा वा धर्म्मार्थकामा यथासमयं सेविताः क्रमशो मोक्षपदप्राप्तिहेतुभूताः, यथा च जीवानां लौकिकीसमुन्नतिराध्यात्मिकाभ्युदयाय

सम्पद्यते, तथाऽमी उपवेदा मानवानां क्रमोन्नतेर्मूलम्; क्रमोन्नतिकारित्वादेव पौरुषेयाणामप्येषामुपवेदनाम्ना व्यवहारः प्रसिध्यति ।

इदं शरीरमैहिकामुष्मिकसाधनानां मूलभूतम्, शरीरास्वास्थ्यबाधितो दौर्बल्यलङ्घितो जन ऐहिकमामुष्मिकञ्च कर्म्म किमपि कर्तुं न शक्नोति, अतस्तच्छ्रेयः सर्वदा सम्पादनीयमिति तदौपयिकं चिकित्साशास्त्ररूपमायुर्वेदं सर्वप्रथमत्वेनाङ्गीकृतम् । अत्र चार्य्यजातीयानामायुर्वेदशास्त्रे सृष्टिविज्ञानम्, शारीरविज्ञानम्, धातुविज्ञानम्, रोगोत्पत्तिविज्ञानम्, रोगपरीक्षणविज्ञानम्, काष्ठौषधिविज्ञानम्, रसायनचिकित्साविज्ञानमस्त्रचिकित्साविज्ञानमित्यादयोऽनेके विषया वर्णनीयत्वेनाधिकृताः । इदमार्य्याणामायुर्वेदशास्त्रमभ्रान्तवैज्ञानिकभित्तिमूलम् । अधुनातनपाश्चात्यजातीयैर्याः पदार्थविद्याः समुद्भाविताश्ताः किल परीक्षया निर्णीताः । अत्रार्यैमर्षयो यत्साधारणमनुष्यबुद्ध्या प्रयोगादिभिः सम्परीक्ष्य क्रमशः प्रकाशितेति । पुरेयं पदार्थविद्या यां साइन्स इति वदन्ति पाश्चात्याः कामपि समुन्नतिमधिगतेति महर्षय एवास्य कारणम् । एते किल महर्षयस्तत्समयौपयिकं यत्किञ्चिदात्मनो योगोपहितबुद्ध्या प्रकाशयामासुस्तत्सर्वमपेतभ्रममेव । तदानीन्तनी पदार्थविद्या दर्शनसिद्धान्तमवलम्बमानाऽऽसीत् । यथाऽत्र निदर्शनम्, यद्गुणः सृष्टेः स्वाभाविकः सप्तभेदो दर्शनसिद्धान्तानुमोदित एव, यथा सप्तोर्ध्वलोकाः, सप्ताधोलोकाः, सप्त व्याहृतयः, सप्त वर्णाः, सप्त स्वराः, सप्त ज्ञानभूमय इति तथा शरीरेऽपि सप्त धातवः स्वीकृताः । अन्यच्च यथा सृष्टिस्त्रिगुणात्मिकाऽतस्तत्सम्बद्धाः सर्वेऽपि पदार्थास्त्रिगुणात्मका भवन्ति, यथा त्रिविधं ज्ञानं, त्रिविधं कर्म्म, त्रिविधो भावः, त्रिविधोऽधिकारश्चेति । एवमेव कफवातपित्तानि शारीरविज्ञानकारणानि । आयुर्वेदोऽभ्रान्तस्तदभिहिता औषधयश्च भारतीयजनप्रकृत्यनुकूलाः अत आयुर्वेदीयचिकित्सा भारतवर्षीयजनानुपकरोति । पुरा किल पूर्वाचार्यैर्महर्षिभिरेतच्छास्त्रीया

अनेके ग्रन्था व्यधायिषत, परं कालेन स्मर्तव्यतां नीतास्ते, इदानीं तेषां दशांशोऽपि नोपलभ्यते । परमन्यापेवेदापेक्षयाऽस्य प्रत्यक्षफलकत्वात् प्रायो बहवो ग्रन्था लभ्यन्ते । अध्यवसायिनः पाश्चात्या विद्वांसो भुवनजन-हितप्रदामिमां विद्यां प्रवर्धीकृजातीयैरलभन्त, उत्तरोत्तरमस्त्रचिकित्सा-विज्ञानस्य रसायनविज्ञानस्य चाधिकामुन्नतिञ्च व्यदधुः । अत्र भारतवर्षे पाश्चात्यजनोद्भावितनूत्नानि विज्ञानान्यादायैवायुर्वेदस्य पुनः प्रचारणा-मपेक्ष्यते ।

धनुर्वेदग्रन्थेषु मनोविज्ञानशारीरविज्ञानमन्त्रविज्ञानलक्ष्यसिद्धिय-स्त्रविज्ञानयुद्धविज्ञानादयोऽनेके विषयाः समुपवर्णिताः । यथाऽऽयुर्वेदः शरीरस्वास्थ्यं बलञ्च प्रयच्छति, शरीरस्वास्थ्यकृतमुक्तिपदप्राप्तेश्च सहा यको भवति तथा धनुर्वेदोऽपि स्वधर्मं जातीयजीवनं शान्तिं स्वदेशञ्च सर्वात्मना पालयति । जातीयस्वाधीनताप्राप्तिरूपमाधिभौतिकमुक्तिवि तरणन्त्वस्य परमं कर्त्तव्यम् । पुराविदो महर्षयः किल मानवानां द्विविधो मृत्युर्निर्दिष्टवन्तः एको योगेनोत्तमोमृत्युरपरश्च धर्म्मयुद्धेन कीर्त्तिकरः । उभौ मुक्तिपदप्रापकौ, यथाऽऽह भगवान् योगी याज्ञवल्क्यः—

द्वाविमौ पुरुषौ लोके सूर्य्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणेचाभिमुखो हतः ॥

इति ।

अन्यो हि मृत्युप्रकारो यत् खट्वामारूढैरेव प्राणाः परित्यज्यन्ते न स आर्य्यजनोचितः । योगयुद्धाभ्यां मृत्युश्चतुर्वर्णानां स्त्रीणामपि सम-फलः । धर्म्ममुपलक्ष्यैव युद्धविद्या प्रवृत्तेति नात्र संशयावकाशः । पुरा धनुर्वेदीयग्रन्था बहव आसन्, परमधुना नैकोऽपि सम्पूर्णो ग्रन्थ उपलभ्यते । यद्यपि कलाकलापपारदृश्वानः पाश्चात्या देशका-लानुसारेण युद्धपोतादीनि जलयुद्धोपकरणानि तथा नालास्त्रशतघ्नी-त्यादींश्च प्रकाशयन्ति । विमानननिर्म्माणपद्धतिमपीदानीमाविष्कुर्वन्ति ।

वर्ं भारतवर्षीयप्रवकालीनलौकिकदिव्यानां शतांशमपि स्रष्टुं न पारयन्ति । यथा, विमानरचनापद्धतिर्व्यूहनिर्म्माणक्रिया च यथा आर्य्यैर्विधीयतेस्म तथाऽधुनादुःशकम् । विलक्षण एव मार्ग आर्यजातीयेषु युद्धविद्यायाः । शौर्याधिक्यं सरलनीतिप्रियत्वं धर्मप्रवणत्वञ्च धनुर्वेदानुमोदितम् । को नु वक्तु श्रीरामचन्द्रभीष्मार्जुनादीनां महावीराणां शौर्यादिगुणावलीम्, अधुना शतद्वयवर्षेभ्यः पूर्वं मेवाड़देशाधिपस्य वीरपुरस्सरा वंश्या धर्मधैर्यशौर्यवीर्यादिगुणपरिपाटीं जगति प्रकाशयामासुर्यदनुपमम् । श्रीमहाभारतादिग्रन्थेषु एतदुदाहरणभूताः कथाः समुपलभ्यन्त एव परमधुनाऽपि मेवाड़राजवंश्या धार्मिकयोद्धारः समभूवन् ये दिवा परस्परं युध्यमाना अपि रात्रावेकस्य चतस्य सेवां चिकित्सां चापरे सम्पादयन्तिस्म । इदानीं धनुर्वेदेन सहैव क्षात्रतेजो विलीनम् सहायसम्पत्तिरहितं ब्राह्मणमपितेजः सुतरां मलिनकायम् सम्वृत्तम् इत्यहो कष्टम् ।

यथा धनुर्वेदग्रन्था नाममात्रशेषाः सम्वृत्ता न तथा गान्धर्ववेदीय ग्रन्थाः । गान्धर्ववेदस्य लौकिका बहुग्रन्था आसाद्यन्ते, आर्षग्रन्था अपि दुरवस्थामनुभवन् जीर्णतनवः प्राप्यन्त एव । यथाऽऽयुर्वेदः शरीरसम्बद्ध एवं मनःसम्बद्धो गान्धर्ववेदः । मनः सङ्गीतसाहाय्येन स्वास्थ्यं बलञ्च विन्दते । **वेदानां सामवेदोऽस्मी**ति वदन् भगवान् यत्सामवेदमहिमानमुपजगौ तद् गान्धर्ववेदसाहाय्यकृतमेव । सामवेद इव जनवशीकरो नापरो वेदः अत एवास्य विस्तारोऽपरवेदापेक्षया शताधिकः । सर्वाधिकः किल गानमहिमा इति उपासनाकाण्डीयग्रन्थेषूपलभ्यते, यथा—

**पूजाकोटिगुणं स्तोत्रं स्तोत्रात्कोटिगुणो जपः ।**
**जपात्कोटिगुणं गानं गानात्परतरं नहि ॥**

इति ।

पुरा गान्धर्ववेदस्य द्वौ भेदौ, देशी विद्या, मार्गीविद्या च । देशी

विद्या लोकरञ्जनात्मिका, वेदगानपरा च मार्गीविद्या । अधुना मार्गीविद्या नाममात्रेण भूतलवर्तिनी । इदानीं या सामगानरीतिर्न सा प्रचलनानुमोदिता, एवं गीतः सामवेदः कलङ्कितो भवति । पुरा षोडशसहस्रपरिमिता रागरागिण्यः षड्त्रिंशदधिकत्रिशतसंख्याकास्तालाश्च व्यवह्रियन्ते स्म, इदानीं पञ्चाशत्सङ्ख्याका अपि रागरागिण्यो दशापि ताला न व्यवहारयोग्याः सन्ति । प्रथां लोकरञ्जनात्मिकां देशीविद्यां त्रयीविद्येत्याचक्षतेस्म, यतोऽस्या गीतं नृत्यं वाद्यञ्चेति त्रयो विभागा आसन् । इदानीन्तनगायकानां नृत्यं पूर्वनृत्यविद्याया शुष्ककङ्कालनिभम् । पूर्णकाया न केऽप्यार्यधन्या विद्यन्त इति प्रतीयत एव सङ्गीतशास्त्रस्याधुनातनी शवनता दशा । शब्दात्मकसृष्टिः संगीतशास्त्रेण निर्णीयते, यथा मूलप्रकृतेः कार्यरूपो भौतिकः सर्गः समुत्पन्न एवं प्रणवात् सप्त स्वरा तेभ्यश्च सप्तभावमयी सृष्टिः समुद्भूतेति सङ्गीताचार्याणां मतम् । वाच्यवाचकयोरभिन्नरूपत्वात्प्रणव'ईश्वरसम्बद्धः । अतः प्रणवाविर्भूतसङ्गीतशास्त्रेणान्तःकरणसमुन्नतिः परमेश्वरसाक्षात्कारश्च भवतीति गान्धर्ववेदविज्ञानसिद्धः पन्थाः । स्वल्परूपेणाप्युपलभ्यमानस्यास्योपत्यार्याणां मानसी समुन्नतिः स्यादिति नात्र सन्देहः । आर्याणां जातीयावनत्या सहैवेयं विद्या समधिकमधःपतन्ती क्षीणाङ्गी सम्वृत्ता । अस्याः क्रियासिद्धांशोऽस्यधर्मावलम्बिहस्तगतप्रायः।अयमपरोऽनुतापहेतुर्यद्विवाहादिमहोत्सवेषु सैन्यरणवाद्येषु चानादृत्य स्वदेशीयसङ्गीतमुपद्वीपीयमेव वाद्यं प्रतिष्ठाप्यत इति । अत एतत्संस्कारोत्तरं सङ्गीतोन्नतिर्विधेयेति ।

शिल्पशास्त्रे नानाविधाः कलाः कारुकार्याणि पदार्थविद्या च(साइन्स) वर्णितेति ग्रन्थान्तरे समुपलभ्यते । तच्छास्त्रं चतुःषष्टिविभागे च विभक्तम् । यथाऽऽन्तरिकोऽभ्युदयो दार्शनिकसमुन्नत्याऽवगम्यते तथा वाह्यसमुन्नतिर्मानवानां शिल्पकलाकारुकार्यपदार्थविद्योन्नतिगम्या । पुराऽऽर्यजातीयैर्निर्मितानामट्टालिकासेतुमन्दिरादीनामुपलखचितानां मूर्तीनां

वल्लरीणाञ्च ध्वंसावशिष्टचिन्हमवलोक्यानुमातुं शक्यते भारतीयचिरन्तनशिल्पकौशलम् । अधुना विध्वस्तं शिल्पलक्ष्म समीक्ष्य को नु चित्रीयमाणचित्तो द्वीपान्तरीयस्तेषां गुणगणान् न श्लाघते, अमानुषञ्च तत्कर्म मन्यते । प्राञ्च आर्या पशुप्रस्तरविद्यां घनलौहसरलस्वर्णाप्रयोगविद्यां, वनस्पतिविज्ञानं, नानाविधयाननिर्माणविद्यां, खनिजविद्यां, बलनिस्सारणविद्यां, कृषिविद्यां, वस्त्रवयनाभूषणनिर्माणरत्नपरीक्षणविद्यां, आकाशतत्त्ववायुतत्त्वाग्नितत्त्वादींश्च लोकोपकारपरान् विषयान् प्रकाशयामासुः । गलितावशिष्टचिन्हानि पुरातनपुस्तकानि चैतत्प्रमाणमुपदर्शयन्ति । परमाध्यवसायिनः पाश्चात्या जलयानमाविश्चक्रुरिति भारतीयशिल्पोन्नतिरेवास्यमूलम् ।

चत्वार उपवेदा इदानीं लुप्तप्रायाः । देवभारत्या देशभाषया चोपवेदभाण्डारं पूरयितुं धर्मधुरन्धराणां विदुषामविरतं श्रममपेक्ष्यते । इदानीं येभ्यः केभ्यश्चित् अन्यजातीयेभ्य उपयुक्ता विषया संगृह्य स्वभाषया निबद्धव्या इति ।

## स्मृतिशास्त्रम् ।

त्रिगुणभेदात् त्रिविधा बुद्धिर्भवति–सात्त्विकी, राजसी, तामसी च । यथैतल्लक्षणं श्रीमद्भगवद्गीतोपनिषदि वर्णितम्—

प्रवृत्तिञ्च निवृत्तिञ्च कार्याकार्ये भयाभये ।
बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥
यया धर्ममधर्मञ्च कार्यञ्चाकार्यमेव च ।
न यथावत्प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसा वृता ।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥

इति ।

यद्यपि स्मृतिशास्त्रे त्रिविधबुद्धीनपि मनुष्यान् धर्मं विनेतुमुपदेशा वर्णिताः, परं प्रधानतया राजसिकान् तामसिकांश्चोपकर्तुमेवाविर्भूतानि स्मृतिशास्त्राणि । सात्त्विकी बुद्धिः प्रज्ञा ऋतम्भरा वाऽभिधीयते, राजसी तामसी वा बुद्धिर्बुद्धिपदव्यवहार्या भवति । यथा योगदर्शने "ऋतम्भरेति तत्र प्रज्ञा" । त्रिविधबुद्ध्यनुसारेण योगानुशासन-शब्दानुशासन-राजानुशासनरूपं धर्मानुशासनं त्रिभेदमाम्नातम् । अत्र जगति तमःप्रच्छादितमतीनामुपकाराय राजानुशासनम्, रजसाऽऽच्छादितस्वान्तानाञ्च सहाय्यं विदधातुं शब्दानुशासनम्, पूर्णप्रज्ञानां सत्त्वावर्जितमानसानां विनयनाय च योगानुशासनं निर्दिष्टम् । स्मृतिषु शब्दानुशासनराजानुशासने यथाक्रमं समाविष्टे । मन्त्रद्रष्टारो महर्षयः स्वस्मृतिपथमारूढं विषयं यद् यत्यात्मना व्यदधुस्तत् स्मृतिशास्त्रं धर्मशास्त्रं प्रोच्यते । न हि मन्त्रद्रष्टारो महर्षयोऽत्र श्रुतिरूपे वेदमन्त्रे न्यूनत्वमाधिक्यम्वा समाकार्षुः । सर्गस्यादौ महर्षीणां समाधिसमाहितान्तःकरणे यदा यादृशा भावाः सत्यप्रचुराः प्रकाशमलभन्त तदैव ते भावा महर्षिभिस्तथैवोपनिबद्धाः, न ह्येषान्तदा स्वावश्यकं विषयान्तरमारूढं स्मृतिपथमिति निष्कर्षः । परं वैदिककालानन्तरं धर्ममर्यादाव्यवस्थापनाय विशेषानुशासनवाक्यानामावश्यकतां विचार्य पूर्वश्रुतविज्ञानमयवैदिकज्ञानोपेताः स्मृतीः समाश्रित्य वर्णधर्माश्रमधर्मप्रजाधर्मराजधर्मादीनि लोकहितकराणि यत् धर्मानुशासनवाक्यानि प्रणीतानि तान्येव स्मृतिरित्यभिधीयन्ते । स्मृतिशास्त्रेषु पूर्णतया वैदिकज्ञानविज्ञानयोः सम्बन्धः स्थापितः, अतो न कान्यपि स्मार्तानुशासनानि वेदविरुद्धतामनुभवन्ति । इयान् विशेषो यत् वेदेषु लाघवगौरवविचाराधिक्यतया क्रमशो लघीयस्त्वमापद्यमाना मानवानां धिषणा विज्ञानमयवेदार्थबोधे स्खलन्ती स्वकल्याणसम्पादनाय न प्रभवतिस्मेति स्मृतिप्रणयनसमुद्योगः प्रस्तुतः । वैदिकशब्दानुशासनं त्रिविधाधिकारेषु च द्वितीयमधिकारं प्रकाशयितुं लोकान् सम्पदा योजितुञ्च पूज्यचरणैः करतलामलकायितत्रिकालैः परमर्षिभिः प्रकाशितं स्मृतिशास्त्रम् ।

योगानुशासनशब्दस्त्वनुशासनेऽधिकं विशृते वेदानां ज्ञानविज्ञान-प्रयत्वात्, अतो वैदिकज्ञानविज्ञानमार्गोपदेष्टा भगवान् पतञ्जलिरनुशासनद्वयमुद्घाट्य विधेयान् प्रवेशयितुं अनुशासनशास्त्रं प्रणीतवान् । अनुशासनप्रवराणि स्मृतिशास्त्राणि यथाऽनुशासनविचारेण जगन्ति पालयितुं प्रभवन्ति न तथा शास्त्रान्तराणि, अतो माहात्म्यमियदेतेषाम् । यथा वेदानां संख्या प्रतिकल्पं पृथक् पृथक् निर्दिश्यते तथाऽनुशासनवरेण्यानां स्मृतीनामपि संख्या नियम्यते । स्मृतयस्त्रिधा विभागमर्हन्ति,—यथा महास्मृतयः, स्मृतयः, उपस्मृतयश्च । महास्मृतौ मनुयाज्ञवल्क्यावन्तर्भवतः । इदानीन्तनकल्पे स्मार्ताचार्या एते संबभूवुः—

मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः ।
यमापस्तम्बसम्वर्ताः कात्यायनबृहस्पती ॥
पराशरव्याससंखलिखिता दक्षगौतमौ ।
शातातपो वशिष्ठश्च धर्मशास्त्रप्रयोजकाः ॥

इति ।

एतैर्निर्मिताः प्रधानाः स्मृतयः । इतोऽप्यधिका गोभिलजमदग्निविश्वामित्रप्रजापतिवृद्धशातातपपैठीनसीआश्वलायनपितामहबौधायनभरद्वाजच्छागलेयजाबालिच्यवनमरीचिकश्यपादिनिर्मिता उपस्मृतयः सन्ति । सर्वाः किल स्मृतय एकोद्देश्येनैव प्रवृत्ताः परं केऽपि स्मार्ताचार्याः कमपि विषयं विस्तरशो वर्णयामासुः, केनाप्याचार्येण कोऽपि विषयः संक्षेपतः समुपवर्णित इति । स्मृतीनामनुशासनवाक्यानि विसदृशानीत्यत्रेदं कारणं यत् सृष्टिवैचित्र्यात् वैदिकसिद्धान्तानां यादृशं स्मरणं येषां महर्षीणां मानसे प्रकाशमापन्नं, तैर्महर्षिभिस्तथा तादृक् भावमयं स्मृतिशास्त्रं प्रकाशितमतः सर्वासां स्मृतीनामध्ययनं युक्तिमत् श्रेयस्करञ्च ।

स्मृतिशास्त्रेषु क्वचिन्मतभेदः प्रतीयते, येन जिज्ञासवः संशयितचित्ता भवन्ति । परं पूज्यपादा महर्षयः स्वस्वसंहितायन्त्रे स्पष्टं प्रकाशि-

तवन्तः कारणविशेषमीदृशमतभेदानाम्, सम्भवति तत्र मतभेदो यत्र पदार्थगुरुता विज्ञानस्य च सूक्ष्मता भवति; परं विज्ञानगौरवे पदार्थला-घवे च न मतभेद आचार्याणां भवितुमपि शक्नोति। यथाऽत्र निदर्श-नम्—कन्यायाः परिणयसमयव्यवस्थापने न विरुद्धं महर्षीणाम्मतम्; किन्तु सर्वे एव परमर्षयो वदन्ति, रजोदर्शनात् प्रागेव कन्या परिणेया इति। परं कन्याया वयोनिर्णये तु विप्रवदन्ते परस्परमाचार्याः, यतः पूर्वविचारे विज्ञानं द्रढीयोऽपरविचारे च तस्य सूक्ष्मता इति। निदर्शनान्तरमुपन्य-स्यतेऽस्य विषयस्य सहजबोधाय यत् मानवानां सामुद्रिकलक्षणैर्भाविफ-लाभिधाने लाक्षणिकानां मतेषु पारस्परिको विरोधो दृश्यते परं गणित-साहाय्येन ज्योतिःशास्त्रानुमोदितफलकथने न भिन्नार्थत्वं गणिताचार्याणां मते संभाव्यत इति। इदमत्रावधेयं—यत् परमेश्वरकल्पानां महर्षीणां मतेषु विरोधः क्वचिद्यदि प्रतीयेत न तत्र जिज्ञासुभिर्हेतोत्साहैर्विचलित-बुद्धिभिर्वा भवितव्यम्; अपि तु देशकालपात्रविचारमनुसृत्यानुशासनर-हस्यावगमाय प्रयतितव्यम्, इदमेव तेषां मुख्यं कर्तव्यम्।

क्वचित् प्रधानतो द्वे स्मृती इति मतमुपलभ्यते, उपस्मृतयश्चाष्टा-दश, एवमोपस्मृतयोऽपि अष्टादश विद्यन्ते। मनुस्मृतियाज्ञवल्क्यस्मृती द्वे मुख्ये, उपरितनसन्दर्भेऽष्टादशोपस्मृतीनां नामानि निर्दिष्टपूर्वाणि औपस्मृतयोऽपि तत्र सङ्कलितप्रायाः। केचिन्महाभारतं पञ्चमो वेद इत्या-चक्षते, केचिच्चास्य स्थलविशेषं स्मृतिरिति वदन्ति। पुरा त्रिविधा अपि स्मृतयः सूत्ररूपा इति सप्रमाणमङ्गीक्रियते, यथा कल्पशास्त्राणि सूत्रा-त्मतयोपनिबद्धानि तथा स्मृतयोऽपि। यद्यपि लुप्ता एव सूत्ररूपाः स्मृतयः परमधुनाऽपि कुत्रचित् सूत्रात्मस्मृतिशास्त्रमुपलभ्यते। इत्थमामन्त्यते यत् प्राचैः स्मार्ताचार्यैः सूत्ररूपेण स्मृतिशास्त्राणि निरमायिषत, परं पर-वर्तिकालेऽल्पज्ञान् जनानुपकर्तुकामैस्तच्छिष्यैः श्लोकबद्धा व्यधायिषत स्मृतय इति। बहुलाः स्मृतयः प्रायशो विषयमेकमवलम्ब्य स्वस्वमतं प्रकाशयामासुः। अधुना तादृशस्य स्मृतिग्रन्थस्य प्रचुरोपकारिता संभा-

ध्यते यत्र वर्त्तमानदेशकालोपयिका विषयाः संगृहीता भवेयुः । वर्णाश्रम-धर्मसदाचारकर्मोपासनादिव्यवस्था दिने दिने परिवर्तते इति स्मृतिशास्त्राणामप्रचार एव निमित्ततया कल्प्यते । यथा यथा स्मृतिशास्त्रस्या-ध्ययनाध्यापनेऽधिकतया प्रचलिते भवेतां तथा तथाऽऽर्यजातिरपि पुन-रुन्नतिपदमधिगन्तुं शक्नुयात् । इदं स्मृतिशास्त्राज्ञानविलसितमेव यदेकदे-शसमुद्भूतब्राह्मणाचारेण देशान्तरीयब्राह्मणाचारो विसदृशतामनुभवति । पुरा येऽयजन्मानः सर्वे एव ब्राह्मणरूपेणाभिन्ना एव, त एवेदानीमात्मानं भिन्नभिन्नमवगच्छन्तः स्वदेशस्य स्वजातेश्चामङ्गलं सम्पादयन्ति । स्मृति-शास्त्रानवबोधमूलकमेवैतत् यत् सनातनधर्मलक्षणमपि न पारयन्ति विद्वांसोऽभिधातुं प्रायशः । चतुर्वर्णतोऽनन्ता जातयः सम्भूताः, इदमपि स्मृतिशास्त्राज्ञानकृतमेव । अधुनैतच्छास्त्रीयग्रन्थानां मार्गणं विधेयम्, तेभ्यश्च लघवो गुरवो वा ग्रन्थाः संग्राह्याः, विद्यामन्दिरे चास्य सार्व-जनीनस्य शास्त्रस्य नीचकक्षात उन्नतकक्षापर्यन्तमध्यापनं प्रचारणीयमिति । यथा यथाऽस्य सर्वजीवहितकरस्य शास्त्रस्याधिकः प्रचारो भविष्यति तथा तथा धर्मोन्नतिरप्यवश्यंभाविनी ।

## पुराणम् ।

पुराणेतिहासावेकजातीयौ । यत्र प्रधानाञ्चरितरूपं पुरावृत्तमुप-निबद्धं स इतिहासः, यथा रामायणम्, यत्र सर्गप्रतिसर्गकथा निबध्यते तत्पुराणम्, यथा शैवं पाद्ममिति । पूज्यपादा महर्षय इतिहासं पुराणं च यत् प्रकाशितवन्तः तत् वेदार्थान् कथारूपेण प्रकाशयितुमेव । बहुतिथात् कालात् भारतीयानां प्रियमादधाति पुराणम्, साम्प्रतमपि भारतवर्षस्या-खिलप्रदेशेषु पुराणसमादरो ग्रन्थान्तरप्रतिष्ठामतिशेते इति दृश्यत एव, न केवलं भारतवर्षीयेष्वेवैवम्विधानां ग्रन्थानां समादरः अपितु परेष्वपि धर्मा सम्प्रदायेषु एवंविधा ग्रन्थाः प्रचलिता इति विचारसरणिमनुसरतां नापरा-द्धम्, प्राकृताः किलेदृशान् ग्रन्थान् बहु मानयन्ति, अत्र तु कतिपये मतिमन्तः यत् गभीरार्थानां धर्मग्रन्थजातानामनुशीलनं न तेभ्यो रोचते, परमपगतकाठि-

न्यमितिहासरूपं धर्मग्रन्थजातन्तु तेषां प्रेमावहमेव । पश्यन्तु भवन्तः, ईसाधर्मे ईसामसीयसमकालीनो न कोऽपि पुराणग्रन्थः, परं वृत्तान्तनिकेतनमुपगतवति तस्मिन् तच्छिष्यैर्निर्माय बहवः पुराणग्रन्थाः प्रकाशिताः-तेषां प्रचारश्च ईसाधर्मे प्रतिदिनमधिकायते एव । एवं महम्मदीयधर्मप्रवणानां 'कुरान' एव मुख्यो ग्रन्थः प्रथममासीत्, परं नामशेषे तस्मिन् तद्भक्तानामैतिहासिकी कथा बहुमानपुरस्सरमेषु प्रचलिता, बौद्धजैनानान्तु कथैव का, यत एतेषां धर्मग्रन्थाः प्रायशोऽस्माकमेव धर्मग्रन्थाननुकृत्य निर्मिताः तेषामादरश्चैतेषु बहु विद्यत एव ।

विद्याभिमानिनः केऽपि महोदयाः सन्दिहन्ति यत् पुराणग्रन्थाः आधुनिकाः, नैतेषां प्रचारः पुरा वैदिक समये आसीत् इति ; तेषामिमं संशयमपनेतुमुपनिषदादिषु बहूनि प्रमाणानि, परमत्र कतिचित् प्रदर्श्यन्ते । यथा शतपथब्राह्मणे—"**ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसौ इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि च**" इति । अपरमपि वैदिकं प्रमाणं समीक्षध्वं यथा छान्दोग्योपनिषदि—"**ऋग्वेदो भगवोऽध्येमि सामवेदमाथर्वणं चतुर्थमितिहासं पुराणं पञ्चमं**" इति । मनुसंहितायामपि—

**आख्यानानीतिहासांश्च पुराणान्यखिलानि च ।**
**स्वाध्यायं श्रावयेत् पित्र्ये धर्मशास्त्राणि चैव हि ॥**

इति ।

एभिर्वचनसमूहैः स्पष्टमेव प्रमाणितं यत् पुराणप्रचारश्चिरन्तनः वेदा अपि पुराणमादर्त्तुमाज्ञापयन्ति ।

शास्त्रकारैः पुराणलक्षणमित्थमुपगीतं, यथा—

**सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।**
**वंश्यानां वंशचरितं पुराणं पञ्चलक्षणम् ।**

इति ।

यत्र महाभूतसृष्टिः, चराचरसृष्टिः, वंशचरितान्वाख्यानं-मन्वन्तरवर्णनं, प्रथितवंश्यानां राज्ञां वर्णनं चेत्येतत् पञ्चलक्षणपूर्णं पुराणमित्यभिधीयते । ब्रह्मवैवर्त्तपुराणे च महापुराणलक्षणमित्थं निर्दिष्टम्, यथा—

सृष्टिश्चापि विसृष्टिश्च स्थितिस्तेषाञ्च पालनम् ।
कर्म्मणां वासनावार्त्ता मनूनाञ्च क्रमेण च ॥
वर्णनं प्रलयानाञ्च मोक्षस्य च निरूपणम् ।
उत्कीर्त्तनं हरेरेव देवानाञ्च पृथक् पृथक् ॥

इति ।

कल्पसृष्टिः, अनुकल्पसृष्टिः, जगतः स्थितिपालने च, कर्म्मणां वासना, मानवानां प्रकाशक्रमः, प्रलयमोक्षौ, हरिकीर्त्तनं, देवानां पृथक् पृथक् गुणवर्णनञ्चेति दश लक्षणं पुराणस्य । पुराणमहापुराणयोर्लक्षणाव-लोकनेन स्पष्टमेतत्प्रतीयते यत् त्रिकालदर्शिभिर्महर्षिवरैः कानुदृश्यात् सफलयितुं पुराणानि प्रकाशितानि । चिरञ्जीवन्तु पुराणानि यैश्चिराय रक्षित एव सनातनो धर्म्मः आपत्समये ऽधुनाऽपि सर्वेऽधिकारिणो-ऽनकेनैव पाल्यन्ते ।

पुराणग्रन्थेषु आख्यायिकां कुत्रचित्परस्परमसंलग्नवर्णनं चाक-र्ण्यन्तः सन्दिहन्ति यत् न पुराणग्रन्थाः प्रामाणिकाः, केवलं काव्यरचना-सरणिमनुसृत्यैव निर्म्मिताः, अन्यथा कथमत्र परस्परमसंबद्धाः सन्दर्भाः प्रकाश्येरन् इति । पौराणिकरहस्यमज्ञानतैवेत्थं मुधा संशय्यते, यतः करतलनिहितबदरसदृशं त्रिकालमालोकयद्भिर्महर्षिवरेण्यैः स्पष्टमभि-हितं यत् पुराणेषु तिस्रो भाषाः समावेशिताः । ता यथा समाधिभाषा, परकीयभाषा, लौकिकी भाषा चेति । तथा च—

समाधिभाषा प्रथमा लौकिकीति तथाऽपरा ।
तृतीया परकीयेति शास्त्रभाषा त्रिधा स्मृता ॥

गुप्तमेतद्रहस्यं वै भाषातत्त्वं महर्षयः ।
सम्यक् ज्ञात्वा प्रवर्त्तध्वं शास्त्रपाठेषु तत्पराः ॥
समाधिभाषा जीवानां योगबुद्धिप्रदायिका ।
नयते नितरामेतान् परमामृतमव्ययम् ।
सुरम्या लौकिकी भाषा लोकबुद्धिप्रसाधिका ॥
परमानन्दभोगान् सा प्रदत्ते नाऽत्र संशयः ।
परकीया तथा भाषा शास्त्रोक्ता पापनाशिनी ।
जीवान् सा पुण्यलोकानां कुरुते ह्यधिकारिणः ॥

इति भरद्वाजपुराणसंहितायाम् ।

यद्यप्यभिहितपूर्वमेतत्पुराणशास्त्राणां पुष्टये यद्गाथापूर्णानामेतादृशग्रन्थानां मनुष्यजातौ विस्तारः स्वाभाविकः उदाहरणविधया ऽन्यधर्मावलम्बिनां पुराणसमादरश्च प्रदर्शितः । नैतावतैत्यमवगन्तव्यं कैरपि यत् सनातनधर्मोक्ता पुराणग्रन्थाः केवलं गाथाग्रन्था एव अपि तु वेदप्रतिपाद्यधर्मनिरूपणपरा धर्मग्रन्थाः । पुराण शास्त्रेषुप्रच्छन्नरहस्याः वैदिकविषयाः क्वचित् समाधिभाषया यथावत् समुपवर्णिताः, क्वचिच्च लोकरीतिमनुसृत्य लौकिकभावसाहाय्येन मनुष्यान् प्रबोधयितुं लौकिकभाषयाऽभिहिताः, क्वचिच्च धर्मरहस्यान् द्रढयितुं गाथारूपेण परकीयभाषया प्रकाशिताः । वेदेष्वपीयमेव शैली समादृता । त्रिविधोऽयं भावविन्यासो निसर्गसिद्धः, यतो न सर्वेऽधिकारिणः सदृशाः, नाप्येकविधो भावः सततं प्रमोदयति, अपि तु विरसतामावहति; अतः पुराणेषु त्रिविधा भाषा समावेशिता । समाधिलौकिकपरकीयभाषाणां याथातथ्यावबोधनमन्तरा पुराणशास्त्राणामध्ययनाध्यापनोपदेशाः न पूर्णफलजनकाः नाऽपि पूर्णानन्दाय सञ्जायन्ते । पुराणशास्त्रेषु सर्वजीवहितकरा भावाः स्थापिताः । ताभिर्वर्णनाशैलीभिः समाधिलभ्या विद्या मा ह्रीयेरन्निति पुराणप्रणेतारो महर्षयः श्रीमतो भगवतः समाप्रार्थनमकार्षुः, यत्—

रूपं रूपविवर्जितस्य भवतो ध्यानेन यत्कल्पितं,
स्तुत्याऽनिर्वचनीयताऽखिलगुरो! दूरीकृता यन्मया
व्यापित्वञ्च निराकृतं भगवतो यत्तीर्थयात्रादिना,
क्षन्तव्यं जगदीश! तद्विकलतादोषत्रयं मत्कृतम् ॥

अष्टादश महापुराणानि यथा विष्णुपुराणे——

अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते ।
ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ॥
तथाऽन्यन्नारदीयञ्च मार्कण्डेयञ्च सप्तमम् ।
आग्नेयमष्टमञ्चैव भविष्यं नवमं स्मृतम् ॥
दशमं ब्रह्मवैवर्त्तं लैङ्गमेकादशं स्मृतम् ।
वाराहं द्वादशञ्चैव स्कान्दञ्चैव त्रयोदशम् ॥
चतुर्दशं वामनञ्च कौर्मं पञ्चदशं स्मृतम् ।
मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम् ॥

इति भगवान्वेदव्यासः ।

तथोपपुराणान्यप्यष्टादशैव समभिहितानि यथा——

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ।
तृतीयं वायवीयञ्च कुमारेणानुभाषितम् ॥
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ।
दुर्वाससोक्तमाश्चर्य्यं नारदीयमतः परम् ॥
नन्दिकेश्वरयुग्मञ्च तथैवोशनसेरितम् ।
कापिलं वारुणं शाम्बं कालिकाह्वयमेव च ॥
माहेश्वरं तथा पाद्मं दैवं सर्वार्थसाधकम् ।
पराशरोक्तमपरं मारीचं भास्कराह्वयम् ॥

इति ।

मतान्तरे तु——

अन्यान्युपपुराणानि मुनिभिः कथितानि तु ।

आद्यं सनत्कुमारोक्तं नारसिंहमतः परम् ॥
तृतीयं नारदप्रोक्तं कुमारेण तु भाषितम् ।
चतुर्थं शिवधर्माख्यं साक्षान्नन्दीशभाषितम् ॥
दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ।
कापिलं मानवञ्चैव तथैवोशनसेरितम् ॥
ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ।
माहेश्वरं तथा शाम्बं सौरं सर्वार्थसञ्चयम् ॥
पराशरोक्तमपरं तथा भागवताह्वयम् ।
इदमष्टादश प्रोक्तं पुराणं कौर्मसंज्ञितम् ॥

महापुराणोपपुराणविषये साम्प्रदायिकमतभेदः कुत्रचिदुपलभ्यते, यथा शैवाः शाक्ताश्च देवीभागवतं महापुराणमङ्गीकुर्वन्ति वैष्णवभागवतञ्चोपपुराणमिति । वैष्णवाश्चात्र विपरीतं प्रत्यवतिष्ठन्ते, ते विष्णुभागवतमेव महापुराणमिति वदन्ति । पूर्व्ववर्णितषट्त्रिंशत्पुराणतो व्यतिरिच्यन्तेऽन्यान्यपि पुराणानि, यानि औपपुराणनाम्ना व्यवह्रियन्ते । तथौपपुराणान्यप्यष्टादश भवन्ति । एवं पुराणशास्त्राणि महापुराणोपपुराणौपपुराणेतिहासपुराणसंहिताभेदात्पञ्चधा विभज्यन्ते । पुराणग्रन्था बहवो लुप्ताः । पुराणशास्त्रेष्विदं महीयो वैषम्यमुपस्थितं, यत् कारणविशेषात् प्रक्षिप्तान्यंशानि कुत्रचित्समावेशितानि यान्यवस्थाभेदादपकुर्वन्ति । पुराणव्यतिरिक्ता ऐतिहासिकग्रन्था अपि पुराणेष्वन्तर्भवन्ति । यथा श्रीमन्महाभारतं, श्रीमद्रामायणञ्च । हरिवंशं महाभारतान्तर्गतं योगवाशिष्ठञ्च रामायणान्तर्भूतमित्यङ्गीक्रियते । कैरप्याचार्यैः पुराणानीत्थं व्यभाजिषत, यत् कर्मविज्ञानप्रधानं महाभारतम्, ज्ञानप्रवणं श्रीरामायणम्, पञ्चोपासनापराण्यन्यानि पुराणानीति । वस्तुतः पुराणान्तरेषु सगुणपञ्चदेवोपासनायाः पुष्टिर्विहिता । जगज्जन्मनि धनादिकारणं विज्ञाय क्वचित् श्रीविष्णोः, क्वचित्सूर्यदेवस्य, क्वचिद्भगवत्याः, कुत्रचिद्गणेशस्य, क्वचिच्च शङ्करस्योपासना वर्णिता ।

वेदेषु यथा कर्मोपासनाज्ञानकाण्डत्रयं वर्णितं तथा पुराणेतिहासेष्वपि तत्काण्डत्रयमुपवर्णितमेव । यथा वा वेदे अध्यात्माधिदैवाधिभूतभावाः प्रकाशन्ते तथा पुराणेतिहासयोरपि इमे भावा वर्णिताः प्राप्यन्ते । यथा भाषात्रयविज्ञानबोधमन्तरा न पुराणेतिहासाववगम्यन्ते तथा वैदिकभावत्रयरहस्यज्ञानमन्तराऽपि पुराणशास्त्रबोधं दुःशकम् । कोऽपि दुर्विदग्धो जनः पुराणशास्त्रं पुरावृत्तप्रतिपादकमिति मन्यते यतते च पौराणिकग्रन्थेभ्यः पुरावृत्तान्वेषणे, परं तदज्ञानविजृम्भितमिति प्रतीमः । इतिहासपुराणानि धर्मपुस्तकान्येवेति तदालोचयतां कृतबुद्धीनां नापरोक्षम् । तत्रेतिवृत्ततत्त्वान्वेषणं पुरातनवृत्तगवेषणम्वा पुराणशास्त्रमानभङ्गाय जायते । विष्णुभागवतस्य रासलीलां देवीभागवतरासलीलया, विष्णुभागवतीयशुकदेवचरितं देवीभागवतोपवर्णितशुकदेवचरितेन तोलने धीमन्तोऽवगन्तुं शक्नुयुः, यदितिहासपुराणेषु पुरावृत्तसम्बन्धोऽस्ति न वेति । अत्र विज्ञानरूपगाथा वैदिकधर्मरहस्यप्रकाशनाय चरित्रवर्णनञ्च प्रजासु तत्तद्धार्मिकभावमुत्तेजयितुं निर्दिष्टम् । यथा सत्यधर्ममाहात्म्यं प्रकाशयितुं हरिश्चन्द्रचरितरूपगाथा, पातिव्रत्यधर्मप्रतिष्ठायै च सावित्रीसत्यवतोश्चरित्रवर्णनमिति ।

पुराणविषये ये सन्देहसन्दोहाः समुत्पद्यन्ते तेषु प्रधानमिदं कारणं यत् साम्प्रतिकपौराणिकेषु त्रिविधभाषाज्ञानं त्रिविधभावरहस्यावगमश्च न भवतीति । अपरमिदं कारणं, यत् समाजे त्रिचतुराण्येव पुराणान्याद्रियन्ते । यद्यपि सर्वाणि महापुराणोपपुराणौपपुराणानि धर्मरहस्यपूर्णानि, परं कुत्रचित्केऽपि विषयाः कुत्रचित्केऽपि विषयाः समुपवर्णिताः । सकलपुराणाध्ययनमन्तरा रहस्यसन्देहा नापनीयन्ते । इतराश्च महापुराणोपपुराणौपपुराणेभ्यो व्यतिरिच्यन्ते पुराणसंहितानाम्ना प्रसिद्धाः ग्रन्थाः प्रचलिताः, यथा वेदव्यासपुराणसंहिता, भरद्वाजपुराणसंहितेत्यादयः । आसु पुराणसंहितासु धर्मविज्ञानानि वर्णितानि, पौराणिकभाषाभावरहस्यं पूर्णतया समुपवर्णितम् ।

अत्र पुराणशास्त्रेषु विविधाः शङ्का अर्वाञ्चो विदधते। उदाहरण-विधया विर्दिश्यते किञ्चित्। वैज्ञानिकानामिदं मतं, यत् पृथिवीच्छायया-च्छादिते चन्द्रमसि चन्द्रग्रहणमभिधीयते, किञ्च पृथिवीसूर्ययोरन्तराले चन्द्रग्रहव्यवधानेन सूर्यग्रहणं भवति, दृग्गणितसिद्धमेतदनुमोदितं गणितावार्यैः, परं पौराणिकास्तु यदा सूर्यश्चन्द्रो वा राहुणा ग्रस्यते तदा सूर्यग्रहणं चन्द्रग्रहणं वा भवतीत्यभिदधते। एभिर्विरुद्धोपन्यासैः क्षुब्ध-स्वान्ता अर्वाञ्चो निन्दन्ति पुराणशास्त्रम्, यतस्तेऽनभिज्ञा पौराणि-कगभीररहस्यानाम्। इयं वर्णना लौकिकभाषयेत्यवसेयम्। यथा त्रिभावस्वरूपस्य परमात्मन ऋषयोऽध्यात्मशक्त्यधिष्ठातारः, देवा देव्य-श्चाधिदैवशक्त्यधिष्ठातारः, पितरश्चाधिभूतशक्तेरधिष्ठातारः, एवं सत्त्व-तमसोः प्रकाशान्धकारयोः पुण्यपापयोः ऊर्ध्वगाधोगशक्तीनाञ्च विचा-रानुसारेणाधिदैवशक्तयो द्विधा विभज्यन्ते, यथा दैवी, आसुरी च। पौराणिकदेवासुरसंग्रामश्चैतद्रहस्यमूलक एव। श्रीमद्भगवद्गीतोपनिषद-भिहित दैवसम्पदसुरसम्पद्विज्ञानमपीमां भित्तिमवलम्ब्यैवास्ते। परिग-म्यते दैवी योनिरासुरी योनिश्चानेनैव मूलतत्त्वेन। मनुष्येष्वपि दैवी आसुरी च प्रकृतिः संजायत इत्येतद्विज्ञानानुमोदितमेव। ग्रहगतो ग्रहान्त-राभिभूत्या तम आविर्भवति, इति लौकिकरीतिमनुसृत्य लौकिकभावय-पुराणेस्तथाविधवर्णनं विहितम्। पौराणिकवर्णनावैचित्र्यादपि संशेरते-ऽज्ञानभिज्ञाः। यथा पुराणेषु पञ्चाशत्कोटियोजनमिता पृथिवीति समुप लभ्यते, परमर्वाचीनैः पाश्चात्यपण्डितैः मत्यचतः साधितमेतत्, यत् एकसहस्रयोजनपरिमिता पृथिवीति। पूर्व कथितो लौकिकपरकीयभाष-योर्दृष्टान्तः स्फुरयति यत् उक्तभाषाभ्यां वर्णने पौराणिकमतभेदः कुत्रचिदुपलभ्यत एव, परन्तु समाधिभाषया सर्वत्र पुराणेष्वेकविधमेव वर्णनं भवति। अपिच लौकिकभाषायामीदृशान् दुरवबोधान् भेदानुपलभ्य पुराणशास्त्रेष्ववज्ञासंवलितां दृष्टिं निक्षिपन्ति ज्ञानाभिमानिनः। अत्रायं

सूक्ष्मतमविचारतः समाधिः, यदि कस्यापि वर्तुलपदार्थस्य घनफलनिःसारणरीतिं गणिताचार्य्यादवगम्य पृथिवीमानविधिसन्देहापनयने प्रवृत्तिर्भवेत्तदा सा सन्देहमपनीय फलवती स्यादित्याशास्यते । वस्तुतः पुराणशास्त्रेषु पृथिवीगोलघनपरिमाणं पञ्चाशत्कोटियोजनानाम् । अभिनवास्तु पृथिवीव्यासमानमेकसहस्रयोजनमिति वदन्ति । उभयोरपि वर्णनं सत्यमेव, परं विचारनेत्राभावादावबुध्यते । एवं मुधैव पुराणे-संशेरते । पुराणशास्त्रप्रवेशाद्दाणि दार्शनिकविज्ञानानि पौराणिकतत्त्वपरिचायकानि च शास्त्राण्यनधीत्यैव सहसा पुराणाचार्य्या भवन्ति स्वयमपरिशीलितपुराणतत्त्वास्ते कथं परान् बोधयितुं पारयन्ति । पुराणशास्त्रस्यासाधारणोपकारिता समाम्नायते । यथा रिङ्गत्तरङ्गमालाकुला पतितान् समुद्धरन्ती भगवती जन्हुतनया हिमगिरेर्निःसृत्य जगत्त्रयशान् पावयन्ती अगाधमहार्णवं संगच्छति, तथा पुराणशास्त्राण्यपि गभीरतमवेदार्थनिःसृतानि नानारूपेण कर्मभूमावत्र वहन्ति धर्मपिपासून् प्रीणयन्ति ब्रह्मानन्दपायोधिमुपतिष्ठन्ते ।

## तन्त्रशास्त्रम् ।

यथा वेदानामुदारो विस्तारस्तथा तन्त्रशास्त्राणामपि । यथा वा संहिता ब्राह्मणोपनिषद्रूपवेदस्य परः सहस्रा ग्रन्थाः प्रचलिताः आसँस्तथा तन्त्रशास्त्रस्यापि सहस्राधिकग्रन्थरत्नानीति सप्रमाणम् । वेदेषु विष्णुयज्ञसदृशाः सात्त्विकयज्ञाः, राजसूयनिभा राजसिकमखाः श्येनयागप्रतिमास्तामसिकक्रतवस्त्रिविधाधिकारिश्रेयसे समुपवर्णितास्तथा तन्त्रशास्त्रेष्वपि त्रिविधाधिकारिप्रीणनाय सात्त्विकराजसिकतामसिकोपासनात्रयं, दिव्यपशुवीराचाररूपास्त्रिविधाचाराश्च समभिहिताः। इदमपरमेतस्य तन्त्रशास्त्रस्य माहात्म्यं, यदत्र कर्मोपासनाज्ञानकाण्डत्रयमत्युदारतया वर्णितमाप्यते । तत्र निर्गुणस्य ब्रह्मण उपासना, सगुणानां विष्णवर्कशक्तिविघ्नेशरुद्राणां पञ्चोपासना च यथावत् निर्दिष्टा । अन्यच्चात्र चतुर्णामुपवेदानां षडङ्गानां सप्त दर्शनानां स्मृतिपुराणानाञ्च

रहस्या विचारिताः सन्ति, अतएव तन्त्रशास्त्रग्रन्थास्त्वात्यधिकं विस्तृतानि । तन्त्रशास्त्राणि त्रिधा विभागमर्हन्ति, भगवता महादेवेन कथितम्, महादेवीकथितम्, महर्षिप्रणीतञ्च । एतान्येवागमतन्त्रं निगमतन्त्रमार्षतन्त्रमिति त्रिधा व्यवह्रियन्ते । कर्मकाण्डमहत्त्वपरिचायकमिदमपि भवति; यत् वैदिकतान्त्रिकरूपतो द्विधैव कर्मकाण्डं विभज्यते । अधुना वैदिकविधेर्लुप्ततया भारतवर्षेऽत् तान्त्रिककर्मकाण्डं तन्त्रसमेतवैदिककर्मकाण्डम्वानुष्ठीयते । इयान् प्रचुरः प्रचारस्तान्त्रिकविधेर्यत् नित्यमनुष्ठेयसन्ध्याविधिप्रवृत्तिस्तेनानुविद्धा । अन्यशास्त्रमिवेदमपि शास्त्रं वेदमूलम् । अधुना तन्त्रशास्त्रग्रन्थानां शतांशमप्याप्तुं दुःशकम् । किञ्च कलियुगेऽस्मिन् तमःप्राधान्यात् सात्त्विकतन्त्राणि लुप्तानि, अन्यच्चार्वाञ्चस्तान्त्रिकभावां सरलां तत्क्रियाविधिञ्चानुष्ठानार्हां प्रवृत्तिपरात् भावांश्च समीक्षमाणाः संशेरते । परं तदज्ञानमूलकमेव ।

अत्र तन्त्रशास्त्रविपक्षा इत्थं प्रत्यवतिष्ठन्ते—यदत्रेन्द्रजालादिक्रिया, मारणवशीकरणादिषड्विधयः, योगिनीमातृकादिसिद्धयः, पञ्चमकारादिभोग्यवस्तूनां वर्णनं च घृणां त्रपां च विधत्त इति परं सत्यमनुसन्धित्सवः सार्वभौमविचारवन्तो जिज्ञासवो यदि पक्षपातशून्यां विचारसरणिमनुसर्तुं पारयेयुस्तदा त्वरितमेवंविधां शङ्कामपनेतुं शक्नुयुः । भक्तिवर्त्मप्रवर्तकवरेण्यो भक्तजनपुरस्सरो भगवान् शाण्डिल्यः प्राह स्वभक्तिमीमांसायाम्—"सर्वानृते किमिति चेन्नैवं बुद्ध्यानन्त्यात्" सर्वं वस्तुजातमपहाय तिष्ठतः सिद्धा किम्प्रयोजनं भवति ? आवश्यकन्तत्—यतो नानाविधा बुद्धयो भवन्ति, अत्रायमाशयो यत् जिज्ञासवः इदानीमित्थमाशङ्केरन् यथा जीवैर्मुक्तिपदप्राप्त्युपाय एव सदा चिन्तितव्यः भक्तिरेव च तेषां श्रेयस्करी, किं निमित्तमत्रैश्वर्यवर्णनं विधीयते ? ऐश्वर्येण किं कर्तव्यं साधकैरिति, इमां शङ्कामपनेतुमना भगवान् व्याजहार—अनन्ता जीवा अतस्तेषां बुद्धिप्रवृत्तयोऽपि भिन्ना एव भवन्ति, न हि सर्व एव जीवा मुक्तिं कामयन्ते । ऐश्वर्येप्सुसाधकानामैश्वर्यप्राप्तिराव-

श्यकी, यतः स्वाभीप्सितसिद्धीरासाद्यैव साधकोऽग्रे गन्तुं शक्नोति । सवासनानां जीवानां न मुक्तिपदाधिकारः, अतः कृपापरतन्त्रस्वान्ताः महर्षयः साधारणसाधकानुपकर्तुं, प्रार्थिनां प्रार्थनाञ्च पूरयितुं स्वस्वग्रन्थे सिद्धिं वर्णयामासुः । पूज्यचरणस्य भगवच्छाण्डिल्यमहर्षेर्विचारः प्रभवति जिज्ञासुजनशङ्काऽपनयनाय । इमं सिद्धान्तमवलम्ब्य तिष्ठन्तः पूर्वाचार्याः स्वानुभवनिर्णीतवस्तुजातं प्रतिपादयन्तः स्वस्वग्रन्थे सिद्धयः सिद्धिप्राप्त्युपायांश्च निर्दिशन्ति स्म । हठलयमन्त्रयोगग्रन्थेषूपासनाकाण्डीयग्रन्थेषु च प्रायशः सिद्धयः समुपवर्णिताः । सर्वविधसाधनद्वारभूते योगदर्शने समधिकं वर्णिताः सिद्धयः । वैदिकधर्ममूला यावन्तः सम्प्रदायाः सन्ति तेषां महर्षिपतञ्जलिकृतयोगदर्शनविज्ञानं निदानमिति । यः कोऽपि सम्प्रदायो ज्ञानोन्नत्यै मुक्तिपदप्राप्तये वा यतते साधनादिभिस्तत् साधनादिकमपेतभ्रमसार्वभौमयोगदर्शनविज्ञानानुमोदितमेव सात्त्विकक्रियायोगमार्गमनुयाति । योगदर्शने केवलं प्राचुर्येणाष्टसिद्धयः एव समुपवर्णिताः, परं तन्त्रशास्त्रेषु प्राचुर्याष्टसिद्धिमारभ्य मारण-वशीकरणादिषट्कर्मसिद्धिपर्यन्तमुच्चावचाः सिद्धयो वर्णिता इति यौनपूर्णता तन्त्रशास्त्रस्य महिमानं प्रकाशयतीति शास्त्रविचारणचपल निजजनुषां विदितमेव ।

धर्मप्रतिपादकशास्त्रेषु किमिति पञ्चमकारानुष्ठानसाधनं स्थापितम् किञ्च मद्यमांसमैथुनादिवचनमुपासनायां ... प्रतीयत इतीयमपरा शङ्का तन्त्रशास्त्रविरोधिनाम् । निष्पक्षपातविचारेणेमामपि निराकर्तुं शक्नुवन्ति जिज्ञासवः । नहि जगतीतले ... सदसद्भूतं किमपि वस्तुजातम्, किन्तु सदसदुद्देश्येनैव सदसद्वा भवति यथाऽत्र निदर्शनं लक्षयामः । ब्राह्मणैः क्रियमाणं मद्यपानमसदाम्नातम् परं रुजार्दितेन ब्राह्मणेनापि रोगमुपशमयितुं कृतं मद्यपानं नह्यधर्माय जायते । यथा परस्त्रीसंसर्गो ऽसत्कार्यमुच्यते, तथा स्वपरिणीतभार्यां योग्यकाले न गच्छेदित्यपि असदेव । यद्यपि परस्त्रीसेवनं विगर्हि

तथापि स्वकीयपत्नीसेवनं हि शास्त्रप्रणोदितमेव । एवं तन्त्रोक्ततत्तत् पदार्थानां ग्रहणाय यदा श्रीगुरुदेवो नियोजयति शिष्यमुपदेशैः स च यथार्थतः शिष्योद्देश्यं सफलयितुं चेत्तदा सद्भूतानामपि तेषां परिग्रहणं भव्यायैवेति नात्र संशयः । भगवान् कृष्णचन्द्रः स्वयमाज्ञापितवान् श्रीगीतोपनिषदि—

"यज्ञार्थात् कर्म्मणोऽन्यत्र लोकोऽयं कर्म्मबन्धनः ॥"

यज्ञादन्यत्र विधीयमानं कर्म बन्धाय भवति । श्रीगीतोपनिषदि भगवता यथावत्प्रदर्शितमेतद्यथा न कोऽपि जीवः क्षणमप्यकर्मा तिष्ठति, अतो मुमुक्षुभिः सदा कर्म विधेयम् । परमत्रेदमवधेयं तैर्यथाऽन्यजन्तुभिः कर्म फलनिमित्तं विधीयते न तथा मुमुक्षुभिर्विधेयम् । अत्रायं निष्कर्षः, मायाप्रगुणितचेतसोऽहङ्कारवन्तो जीवाः स्वाभिमतसाधनाय साधारणतः कर्म विदधति, न तथा मुमुक्षवो जीवाः कुर्युः । किन्तु तेऽपहायाहङ्कारं नरस्य स्वार्थबुद्धिं केवलं कर्तव्यमिति यदा विदधीरंस्तदा तत्कर्म न तेषां बन्धाय सञ्जायते अपि तु तन्निष्कामकर्मणा साधकोऽमृतत्वमश्नुते । पूर्वोक्तभगवदुक्त्युदाहरणभूतमिदं निर्दिश्यते यथा रसज्ञातृप्तये यथाभिलाषं स्वादुतरभोजनोपभोगो मानवानां बन्धननिदानम्, तथा न दिव्यरसवतामपि वस्तूनामुपभोगः साधकानां बन्धाय भवति, भगवदर्पितावशिष्टं भक्तिभावितमानसा निष्कामतया प्रसादमिति यदा भुञ्जीरन् साधकाः । एतदेव प्रकारान्तरेणोपन्यस्यते सहजबोधाय, सततं साधकानां साधनमेवोद्देश्यभूतम्, शरीरनैरुज्यं साधनं सफलयितुं मुख्यं कारणम् । साधनविनिहितचित्तैः साधकैर्भोजनं विस्मर्तुं शक्यते किन्तु यदा क्षुधाकुलीभूते शरीरे साधकाः साधनं कर्तुमपारयन्तः परित्यज्य साधनमाशु भोज्यद्रव्यैरुदरमापूर्य पुनः साधने प्रवृत्ताभवेयुस्तद तद्भोजनमपि यज्ञप्रतिममेव । अतो मुक्तिप्राप्तिं निमित्तीकृत्यासदपि वस्तु सदिवोपचर्यते । यथाऽत्र भगवान् मनुः स्वाभाविकीं प्रवृत्तिं प्रतिपादयन्नाह—

**प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला ।**

किन्त्वेपासनासम्बन्धि भक्तिदर्शने सिद्धान्तितमेतत्—यत् निवृत्ति-मार्ग एव सर्वदाऽनुसन्धातव्यः साधकैः परन्तु प्रवृत्तौ निवृत्तौ च क्रमो-न्नतिः सम्भाव्यते । प्रवृत्त्या क्रमिकोन्नतिलाभे भक्तिदर्शनमित्थमभिदधौ कर्मोपासनाज्ञानयज्ञैः क्रमोन्नतिरवाप्यते । **"स्वाध्यायोपासनाकर्म-योगैस्त्रिविधशुद्धिः"** इत्यादि पद्यकैः । पुनश्च निवृत्तिमार्गमनुगच्छतां साधकानां कल्याणायाध्यात्मचिन्तनविभूतिपूजनविशुद्धभावीयभोगादि-भिर्भावशोधनमभिहितम्, **"अध्यात्मचिन्तनशक्तिपूजनभावशु-द्धिभिरितरत्र"** इति । एवं प्रवृत्तिपथानुयायी साधकः त्रिविधशुद्धिं सम्पादयन् निवृत्तिमार्गसिद्धिं लभते । यथा भक्तिदर्शनीयस्थितिपादे प्रोक्तम्—**"एतया तल्लाभः"** इति । नदीप्रवाहानुकूलं गच्छन्ती नौका त्वरितं प्राप्यं स्थानमाप्नोति, परन्तु नदीस्रोतोविप्रतीपगामिनी सा विप-द्यते, न च पदात्पदमपि गन्तुं लभते । इत्थं प्रकृतिप्रवृत्त्यनुगतमेव साधनं फलाय कल्पते यथा भोगाभिलाषुकायाभिकाय नरपतये प्रदत्तो वैराग्योपेतयोगसाधनोपदेशः केवलमूषरक्षेत्रपतिता बीजमुष्टिरिव नैष्फल्यं भजते । परं यदि तदीयेन्द्रियश्लाघ्यैरुपायैस्तं नियोज्य साधन-विधौ कौशलपूर्णया क्रियया विधाय भावशुद्धिं तदीयान्तरिकवृत्तिं निवृत्तिपथमभिमुखयेत्तदोपदेशफलाशा सम्भाव्यते । प्रकृतिः किल प्रसह्य स्वाभिमतेऽर्थे नियोजयति जीवानिति श्रीमद्भगवद्गीतोपनिषदि विशदमेव—

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥**

इत्यादिवचनकलापैः । तस्मान्निश्चित एव सरलः पन्थाः, यत्र हि सर्वेऽधिकारिणः प्रवृत्तिमार्गमभीप्सन्ति । यद्यपि निवृत्तिपन्थानमुद्दि-श्यैव साधकैर्यतितव्यम्, परं प्रवृत्तिधनानां साधारणसाधकानामपि कल्याणाय साधनं निर्देष्टव्यम् । तन्त्रशास्त्रेषु निवृत्त्युपायाः सप्रवृत्ति

साधनानि च समावेशितानि। एभिस्तन्त्रशास्त्रस्य महत्त्वं सर्वगा दृष्टि सर्वजनहितकारित्वञ्च परिचीयते।

अत्र शास्त्रे सात्त्विक-राजसिक-तामसिकं त्रिविधं कर्म त्रिविधोपासना च सविस्तरं वर्णितम्। उच्चतमसात्त्विकाधिकारिकतन्त्राणि अतिनिम्नतामसाधिकारतन्त्राण्यपि विद्यन्ते। प्रशस्ततमकर्मणि उपासनाविधौ चास्योपकारित्वे एतावदेव वक्तव्यं यदधुनाऽऽर्यजातीयानां कर्मोपासनाभ्यां तान्त्रिकविधेरधिकः सम्बन्धो दृश्यते। निम्नाधिकारोपसाधनेषु चेयत्तेव समाहितं स्याद्यत् कश्चिच्चास्तिक्यचौर्यानृतवादित्वादियुक्तो नृशंसो जनः, किमस्मात्तामसिकोपासकः कापालिको न प्रशस्यते? अवश्यं कापालिक अपेक्षाकृतं धार्मिकत्वमुपचर्यते। किन्त्वाधःपातमधिगच्छन्त्या जातेर्लक्ष्मैतत् यत् तस्या दृष्टिर्दोषानुसारिणी न गुणकलापमपि द्रष्टुं पारयति। उपरितनविचारसन्दर्भतस्तन्त्रशास्त्रीया दोषाः निराकृता इति तस्य सार्वजनीनत्वं प्रसिध्यति। तन्त्रमाहात्म्यं तल्लक्षणञ्च स्फुटयितुमापेतन्त्रात उपन्यस्यन्ते प्रमाणतया कानिचित् पद्यानि—

विष्णुर्वरिष्ठो देवानां ह्रदानामुदधिस्तथा।
नदीनाञ्च यथा गङ्गा पर्वतानां हिमालयः॥
अश्वत्थः सर्ववृक्षाणां राज्ञामिन्द्रो यथा वरः।
देवीनाञ्च यथा दुर्गा वर्णानां ब्राह्मणो यथा॥
तथा समस्तशास्त्राणां तन्त्रशास्त्रमनुत्तमम्।
सर्वकामप्रदं पुण्यं तन्त्रं वै वेदसम्मतम्॥

इति मत्स्यसूक्ते।

लक्षणञ्चेत्थमाम्नातम्—

सर्गश्च प्रतिसर्गश्च तन्त्रनिर्णय एव च।
देवतानाञ्च संस्थानं तीर्थानाञ्चैव वर्णनम्॥
तथैवाश्रमधर्मश्च विप्रसंस्थानमेव च।
संस्थानञ्चैव भूतानां यन्त्राणाञ्चैव निर्णयः॥

उत्पत्तिर्विबुधानाञ्च तरूणां कल्पसंज्ञितम् ।
संस्थानं ज्योतिषाञ्चैव पुराणाख्यानमेव च ॥
कोषस्य कथनञ्चैव व्रतानां परिभाषणम् ।
शौचाशौचस्य चाख्यानं नरकाणाञ्च वर्णनम् ॥
हरचक्रस्य चाख्यानं स्त्रीपुंसोश्चैव लक्षणम् ।
राजधर्मो दानधर्मो युगधर्मस्तथैव च ॥
व्यवहारः कथ्यते च तथा चाध्यात्मवर्णनम् ।
इत्यादिलक्षणैर्युक्तं तन्त्रमित्यभिधीयते ॥

तन्त्रशास्त्रेषु भावत्रैविध्यं भावत्रयञ्च सर्वत्र न्यस्तमिति प्रतीयत एव । तन्त्राणि महादेवप्रणीतानि देवीप्रणीतानि चेत्यत्र विरुद्धं प्रत्यवतिष्ठन्तेऽर्वाञ्चस्ते इत्थमभिदधते यत् किं देवो महादेवो देवी च मनुष्यरूपमास्थाय तन्त्राणि निर्ममे इति । त इत्थं समाधेयाः, यथा वेदा भगवता परमेश्वरेण प्रकाशिता इति सम्भाव्यत एव, तथा तदंशरूपचिच्छक्तिभावैस्तन्त्राण्यप्याविर्भूतानि । अपौरुषेया अनादिनिधना अथान्ता ज्ञानज्योतिष्मन्तो वेदा यथा परमेश्वरेच्छया तदनुमत्या वा रूपेण समाधिलब्धबुद्ध्या पूर्वाचार्यैः परमर्षिभिः प्रकाशितास्तथा पार्वतीपरमेश्वरयोरिच्छया समाहितान्तःकरणैस्तद्भक्तमुनिजनैस्तन्त्रशास्त्राण्यपि जगति प्राकाश्यन्त इति कोऽत्र सन्देहावसरः । अधुना तान्त्रिकग्रन्थाः प्रायो लुप्ता येषां शतांशोऽपि प्राप्तुं दुःशकः । उपलभ्यमानतन्त्रग्रन्था न सर्वाधिकारिका न चाद्रियन्ते सर्वत्र यथावत् । किञ्च सात्त्विकतन्त्राणामध्ययनाध्यापनविलुप्ततया एवमन्यैर्बहुविधैः कारणविशेषैस्तान्त्रिकशिक्षा ह्रासमानमनुभवति दिनाद्दिनम् । साम्प्रतमिदं कर्तव्यं यत् उपलब्धिविषयीभूतानां तन्त्रग्रन्थानामनुशीलनम् आवश्यकीयविषयसंग्रहेण पृथक्पृथग्ग्रन्थानां निर्माणं, तेषां प्रचारणं च परमलाभायेति निश्चीयते ।

इत्युपदेशपारिजाते निगमागमस्वरूपवर्णनम् ।

# उपदेशप्रणाली ।

इयमार्य्याणां पौरस्त्यशैली, सनातनधर्म्मस्य च चिरन्तनो नियमो-यत् सर्वविधकार्य्यारम्भे मङ्गलमाचर्य्यते । सनातनधर्मोद्देश्यस्यान्तर्मुखीणत्वात्, आर्य्याणाञ्च नैसर्गिकास्तिकत्वात् मङ्गलाचरणविधानमन्तरा न किमपि कार्यं प्रारब्धव्यम् । निष्कामवृत्तिमास्थाय विचारे विहिते तु सुखानां धर्म्माणाञ्चैकमाश्रयभूतं धाम परमेश्वर एव । श्रीगीतायामपि भगवतेत्थं प्रतिपादितम् ।

ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ।
शाश्वतस्य च धर्म्मस्य सुखस्यैकान्तिकस्य च ॥

इति ।

अतो निष्कामतया धर्म्ममुपदिशतामपि मङ्गलाचरणं परमं कर्त्तव्यम् । सकामधर्म्मोपदेशकैस्त्ववश्यं तद्विधेयम् । यतो भगवत्कृपामन्तरा न किमपि कार्यं सिध्यति । आचार्य्याः शिष्यं सन्न्यासिनश्च गृहस्थं धर्म्मोपदेष्टारो वा लोकसमाजं शिक्षयेयुः परं प्रथमतो मङ्गलमवश्यमाचरणीयम् । मङ्गलाचरणं केवलं वचनोपन्यासैरेव न विधेयमपि तु मनसापि भक्तिप्रवणेन भगवच्चिन्तनरूपं मङ्गलमाचरणीयमिति । यद्यैकैकमेवोद्दिश्य जनं किञ्चिदुपदिश्यते तदा बाह्यमङ्गलाचरणं नापेक्षणीयं किन्तु तत्रापीश्वरे मनो निधातव्यं तदेव तत्र मङ्गलाचरणमिति । मङ्गलमाचरन्नात्मानं लघीयांसं भगवन्तं च गुरुशक्तिमन्तमेकतानमना ध्यायेत, तदा हृदि विचिन्तयेदित्थं यत् भगवान् सर्वज्ञोऽप्रमेयशक्तिविशिष्टश्च, अहञ्चाल्पज्ञः क्षुद्रशक्तिश्चाऽस्मि, अतो भगवत्कृपयैव सर्व्वं कार्य्यजातं सेत्स्यतीति । किञ्चान्यदपि तदावधेयम् यद्धर्म्मोपदेशेनं भगवतो नारायणस्य कार्यमहमत्र धर्म्मकार्य्ये निमित्ततया कल्पितः ।

धर्म्मवक्तारश्चतुर्धा विभागमर्हन्ति । प्रथमे गुरव आचार्य्या वा,

द्वितीयाः संन्यासिनः साधवश्च, तृतीयाः पुराणवाचकाः, चतुर्थी धर्म्मव्याख्यातारो महोदयाः; यथा श्रीभारतधर्म्ममहामण्डलसदसो धर्म्मवक्तारः श्रेणित्रये विभक्ताः । प्राथमिकीयमुपदेशप्रथा यदि जिज्ञासव आचार्य्याभिमुखमुपतिष्ठेरन् प्रार्थयेरंश्च, तदाचार्य्यैर्जिज्ञासुयोग्यतानुसारिधर्म्मउपदिश्यते । द्वितीयप्रथेत्थं यत् सन्न्यासाश्रमिणा बहूदकैः हंसैः परमहंसैरन्यैर्वा साधुभिर्देशेऽटाट्यामाचरद्भिः स्वाश्रममर्य्यादाञ्च रक्षद्भिस्तद्देशवासिभ्यो धर्म्मोपदेशः । तृतीया चेयं शैली यद्व्यासासनमध्यासीनानां पुराणशास्त्रमवलम्ब्य स्वेच्छया जनसमाजे शास्त्रं व्याख्याय धर्म्मोपदेशदानम् । तुरीया चेयं रीतिर्यत् कस्यामपि सदसि समुत्थाय तां सभां सभापतिना नियमशृङ्खलितां विधाय धर्म्मोपदेशकैर्धर्म्मोपदेशः । हरिकथका उपदेशशैलीविचारतोऽत्रैव कुत्रचित् स्थापयितुं युज्यन्ते । यतस्तेषामुपदेशे पौराणिकगाथायाः सङ्गीतस्य वक्तृताया अभिनयस्य च सम्बन्धो दृश्यत इति । इयं शैली दक्षिणभारते हरिकथानाम्ना पूर्वभारते च कथकतानाम्ना प्रसिध्यति । स्वस्वदेशकालपात्रौपयिकी धर्म्मोपदेशरीतिर्धर्म्मं समुचेतुं शिक्षयितुं च लोकान् हितानुबन्धिनीति नात्र विदुषां संशयः । किन्तुधर्म्मोपदेष्टृभिः स्वस्वकर्त्तव्यज्ञानं यथाधिकारमुपदेशज्ञानञ्च सम्पाद्योपदेशे प्रवृत्तिर्विधेया ।

यदान्तः शब्दा नीयन्ते तदा शब्दादर्थोऽर्थतश्च भावः श्रोतृजनहृदये समुद्भवति । विज्ञानमिदं सहजबोधाय स्पष्टयितुमित्थं वक्तुं शक्यते यत् प्रथमतो धर्म्मोपदेशका लोकसमाजे दानवृत्तिमुद्भावयितुं दानप्रशंसापरवाक्यानि दानधर्म्मप्रवर्त्तकान् भावांश्च शब्दैः प्रथयन्तो वर्णादिवृत्तिप्रकाशकहावभावमुद्रादिभिः करुणरसमाविर्भावयेयुः । ते च शब्दाः श्रोतॄणामन्तःकरणेऽर्थं प्रकाश्य धार्म्मिकभावमुत्पादयन्ति, अन्यतः करुणरसोद्दीपकानि वक्तुर्मुद्राहावभावचेष्टादीनि नेत्रवर्त्मतः प्राप्य हृदयं करुणरसमुद्रेकयन्ति तं धर्म्मभावं पोषयन्ति च ।

ततः श्रोतृजनहृदये धर्म्मभावः करुणरससाहाय्यादाविर्भावयति दानवृत्तिं । उदाहरणमिदं धर्म्मोपदेशविज्ञानबोधे पूर्णतया सहायतां विधास्यति । अधुना सिद्धमेवैतत् यत् सर्व्वविधवक्तॄणां शास्त्रीयरहस्यप्रकाशने यथावच्छब्दपुञ्जविन्यासे पूर्णरसतत्त्वार्जने मुद्राचेष्टाहावभावादिभिः रसप्रकाशनाय योग्यतासम्पादने सद्गुणाधिकारिणि सद्गुणशब्दोपन्यासैरुपदेशयोग्यतालाभे च शिक्षाग्रहणमुचितम् । साधवो महात्मानः पुराणवाचका धर्म्मोपदेशका वा भवेयुः परमुपरितनलिखितविषये योग्यतालाभः परमावश्यकः ।

अलङ्कारः प्रधानतया द्विविधः, शब्दालङ्कारोऽर्थालङ्कारश्च । अनुप्रासयमकादयो भेदाः शब्दालङ्कारस्य । अर्थालङ्कारस्तूपमोत्प्रेक्षारूपकातिशयोक्तिनिदर्शनातुल्ययोगितादिभिरनेकविधः । सृष्टानन्त्यात् भावस्यानन्तता तेन चार्थालङ्कारस्याऽप्यानन्त्यम् । पदविन्यासाय चतस्रो रीतयः स्वीकृताः वैदर्भी गौडी पाञ्चाली लाटी चेति । माधुर्य्यौजःप्रसादाख्यास्त्रयो गुणाः शब्दानां । करुणरसे माधुर्य्यगुणस्याधिका स्थितिः । ओजोगुणेन च वीरवीभत्सरौद्ररसाः संबद्धाः । प्रसादगुणस्य चतुर्द्दशरसेषु सामान्यतः सम्बन्धो मन्यते, परं सप्तमुख्यरसैस्त्वस्य गरीयान् सम्बन्धः । अद्भुतहास्यभयानकाः व्यङ्ग्यप्रधानतया स्वतन्त्रतः कदाचिदोजोगुणेन कदाचिच्च माधुर्य्यगुणेन संबद्धाः । साहित्यशास्त्रानुशीलनपुरस्सरं पूर्वोक्तविषये ज्ञानलाभः परमावश्यकः । एतत्सर्वं विज्ञाय या कापि भाषा व्यवहार्य्या भवेत्तामधीत्य यथावत् शब्दविन्यासे योग्यतां लभन्त उपदेशकाः ।

उपासनाकाण्डीयदैवीमीमांसायां चतुर्द्दशरसा अङ्गीक्रियन्ते। तत्र हीत्थं निर्दिष्टम्–“भावमयदृश्यस्य चतुर्दशविधतया सप्तज्ञानभूमयः सप्ताज्ञानभूमयः, रसज्ञानमपि चतुर्दशधा, तत्र सप्त मुख्याः सप्त गौणाः । हास्यादयो गौणाः, दास्यासक्ति-सख्यासक्ति-कान्तासक्ति-वात्सल्यासक्त्या-

त्मनिवेदनासक्ति-गुणकीर्त्तनासक्ति-तन्मयासक्तयश्च मुख्याः" इति। वीरकरुणाद्भुतहास्यभयानकबीभत्सरौद्रा एते सप्त रसा गौणा यत एतेऽज्ञानप्रधानाः। लौकिकशृङ्गारः शुद्धशृङ्गारश्चेति द्वौ भेदौ शृङ्गारस्य। काव्यशास्त्रानुसारेण पूर्व्वाचार्य्यैर्लौकिकशृङ्गारो गौण एवाभिहितः। शुद्धशृङ्गारस्तु भक्तिमार्गाचार्य्यैर्मुख्यरसरूपेण सप्तधा व्यभाजि। भक्तिशास्त्रे रसस्वरूपो भगवान् प्रतिपादितः, वेदेऽपि तुल्योऽयं पन्थाः, तथा च श्रुतिः "रसो वै सः"। तत्र कार्य्यकारणयोरभिन्नरूपत्वात्कार्य्यब्रह्म कारणब्रह्मापि रसस्वरूपः शृङ्गारमय एवेति; तयोः प्रकृतिपुरुषस्वरूपदम्पत्योः शृङ्गारप्रचुरा विलासमयीयं सृष्टिक्रिया सन्ति च यस्यां सप्त मुख्या रसाः सप्त च गौणाः। सप्तमुख्यरसानां नामानि यथा—दास्यसख्यकान्तावात्सल्यात्मनिवेदनगुणकीर्तनतन्मयाश्च। भक्तिमार्गानुसारेण सर्वे रसा एकत्र परिसमाप्यन्ते, मुख्यरसास्तु प्रददत्यपवर्गम्। यथेन्द्रियाणां शुद्धविषयवती प्रवृत्तिः चित्तैकाग्र्यं विधाय समाधिप्राप्तिहेतुभूता भवति। यथाह भगवान् पतञ्जलिः "विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी", तथा मलिना अपि सप्त गौणा रसाः शुद्धभावमाधाय मुक्तिकारणीभूतां भक्तिं प्रसुवते यतो भगवान् रसस्वरूपस्तस्यैवेदं सर्व्वं वैभवम्। उपदेशकैर्लौकिकं साहित्यशास्त्रं भक्तिमार्गीयं रसविज्ञानञ्च परिशीलनीयम्। यतः पूर्णरसज्ञा एव धर्म्मवक्तृपदवीं लब्धुमीशते।

यथोपासनायां शङ्खचक्रधनुर्गदकम्बादयो मुद्रा अपेक्ष्यन्ते तथोपदेशेऽपि वाह्यलक्षणचेष्टाहावभावमुद्रादयः प्रमाणैर्धर्मोपदेशे काश्चिन्मुद्रा आसन्। भक्तिमुद्रा ज्ञानमुद्रा अभयमुद्रा वरमुद्रेत्यादयः। परं ताः किल सात्त्विकोपदेशविषयाः। राजसिकव्याख्यानौपयिकमुद्राणां प्रचारः साम्प्रतिकार्यपुस्तकेषु न बहु समुपलभ्यते। साम्प्रतं नव्यजातीयैः पाश्चात्यैः शिक्षाशिल्पकलासमाजराजनीति-

समुचत्याद्विराजसिककार्येषु व्याख्यानैः प्रभूतं साहाय्यं विधीयते । अत्रैतज्जातीयाः सर्वे एव शिक्षिता व्याख्यातुं जानन्ति सम्यक् । तेषु मुद्राप्रदर्शनरीतिर्बहु मन्यते । अतएव तेषां व्याख्यानशिक्षापुस्तकेषु भूयसी मुद्रा वर्णिता । अत्र भारते वर्षे शिक्षाप्रचार-धार्मिकभावोत्तेजन-शिल्पवाणिज्यसमालोन्नति-नियमबद्धानुशासनस्थापन-सभास्थापनादीनि लोकहितकराणि कार्याण्यनुष्ठातुमिच्छद्भिर्धर्मोपदेष्टृभिः पाश्चात्य-व्याख्यानशिक्षापुस्तकेभ्यो मुद्राप्रदर्शनरीतिरवगन्तव्या । तत्र च याः स्वदेशकालोपयोगिन्यो भवेयुस्ता ग्राह्याः । पाश्चात्यव्याख्यातृधुरन्धरं डिमस्थिनिस्महोदयं कोऽपिजिज्ञासुः पप्रच्छ यत् श्रोजस्विव्याख्याने साफल्यं लम्भयितुं को विषयो बहूपकरोतीति । तत्समाधाने तेन वारत्रयं प्रोक्तं यत् जनसमाजे प्रभावमास्थापयितुं मुद्रैव हितकरीति । व्याख्यानबोधसम्पादनायालङ्कारज्ञानं रसज्ञानं तत्तदनुकूलमुद्राज्ञानं च हितकरत्वेन प्रख्यातम् ।

यथावज्जनतां सभां च परीक्ष्य विहितो धर्मोपदेशोऽधिकफलाय कल्पते । यथा मनुष्याणां व्यक्तिगतप्रकृतिप्रवृत्तिस्वभावविद्याबुद्धिविज्ञानतस्तदनुकूलोपदेशस्त्वरितमेव तत्र प्रभवति तथा मानवसभापरीक्षणतस्तदनुकूलोपदेशेन तत्राधिकं प्रभवितुं शक्यते । यत्र सदसि यादृशप्रकृतिप्रवृत्तिगुणकर्मस्वभावविद्याबुद्धिका जनाः लभ्येरंस्तत्र तदुपयोगि व्याख्यानं समुचितम् । सभायां यद्यप्यधिकमनुष्यसङ्ख्यानुसारिणी व्याख्यानशैली निर्धारिता भवति, परं सर्वदा यतितव्यम् यथा व्याख्यानप्रवाहमनुगच्छतां सभ्यान्तराणामपि चित्तमावर्जितं स्यात् । व्यष्टिगतधर्मोपदेशरीतेर्विलक्षणैव समष्टिसभायां धर्मोपदेशरीतिः । सभायां धर्मोपदेशः सर्वजनतृप्तय इति धर्मोपदेशकेन सदावधेयम् । सात्त्विकश्रोतृभ्यो विज्ञानम्, राजसिकेभ्य दृष्टान्तदार्ष्टान्तपूर्णा युक्ति, तामसिकेभ्यश्च गाथामधिकं रोचते । सात्त्विक-

श्रोतॄणां निष्कामभावव्याख्यानं, राजसिकश्रोतॄणां सकामभावव्याख्यानं, तामसिकश्रोतॄणां च प्रियं सुस्वरं रुचिकरभावभावितञ्च व्याख्यानं प्रीतिमुत्पादयति। सात्त्विकश्रोतारो मितामर्थवत्तराञ्च गिरं बहु मन्यन्ते। राजसिकश्रोतृभ्योऽल्पसारा पुनः पल्लविता वाणी रोचते। तामसिकश्रोतॄंश्च निस्साराः पुष्पितशब्दा एव रञ्जयितुं क्षमन्ते। सात्त्विका ज्ञानोद्दीपकैः राजसिकाः सुखप्रवृत्तिकरैः तामसिकाश्च वैषयिकानन्दप्रतिपादकैः शब्दैः प्रसन्नतां भजन्ते। धर्मवक्तुरियमेव योग्यता यत् पूर्वाभिहितरीत्या भावान् शब्दांश्च प्रकाशयन्तो न धर्मं विस्मरेयुः। किञ्च स्वोद्देश्यं सफलयितुं सावहितचित्ता भवेयुः। अत्रेदमवधेयं यत् पूर्वमभिहिता शैली महत्यामेवसभायां व्याख्यातुं धर्मोपदेशकस्यैव क्षेमङ्करी। श्रीगीतादिशास्त्रेषु वर्णितानां त्रिविधकर्तृत्रिविधबुद्धित्रिविधज्ञानानां लक्षणं सम्यग्विज्ञायाधिकारिनिर्णयनमुपदेशकानां कर्तव्यम्।

पुराणवाचकानां हरिकथकानां सभायां धर्ममुपदिदिक्षतां धर्मवक्तॄणाञ्च सामान्यतः सङ्गीतशास्त्रज्ञानमावश्यकं हितकरञ्च। षड्जर्षभगान्धारमध्यमपञ्चमधैवतनिषादानां सप्तस्वराणां सप्तकत्रयसाधनेन कण्ठो नियम्यते। ततः श्रुतिमूर्च्छनरागरागिण्यः शिक्षितव्याः। तालज्ञानमप्यावश्यकमुपदेशकानाम्। यतः स्वरा यथा नादब्रह्मसंबद्धास्तथा कालतालयोः सिद्धसाधकरूपः सम्बन्धोऽस्ति। भूयसी सङ्ख्या रागरागिणीनाम्। प्रतियामार्धं प्रतियामं वा गानोपयिकरागरागिणीनां स्वरूपविज्ञानमेव रसानुत्पादयितुं श्रोतॄनावर्जयितुञ्च प्रभवति कलकण्ठस्य धर्मोपदेशकस्य व्याख्यानं समधिकफलाय कल्पते जनसमाजेषु। अनुशीलितसङ्गीतस्य वक्तुर्व्याख्यानमधिकाधिकं प्रभावमास्थापयति। सङ्गीताचार्यशिक्षाधिगमनेनापीयं योग्यता प्राप्यते। व्याख्यानारम्भतः प्राक् वक्त्रेत्थं चिन्तितव्यं यत् गुरुशक्तिर्भगवान्, अहञ्च क्षुद्रशक्तिः केवलं निमित्तभूतेनैव मया भगवत्कार्यमिदं सम्पाद्यते। तत्करयैवेदं

कार्यं सेत्स्यति । आरब्धव्याख्यानेन च वक्त्रेत्थं ध्येयं, यदस्मि ज्ञानवान्, सर्वानेव सभास्तारानुपदेष्टुमीशे। यदि परिषदि पूज्यचरणा गुरवो वरिवस्यार्हा अपि वा जनाः समीयुर्न तदापि क्षुब्धस्वान्तेन धर्मोपदेशकेन भवितव्यम् । सर्वे सभ्या उपदेश्या इत्येवावगन्तव्यम् । इत्थं चित्तबलसम्पादनमन्तरा न वक्तृपदं लब्धुमीष्टे कोऽपि । दृष्टिप्रक्षेपविषय एष एव नियमः समुचितो यत् सात्त्विकजनोपयोगिव्याख्याने दृशः सात्त्विकसभास्ताराः लक्षणीयाः । राजसिकोपयोगिविषयानुपदिशता राजसिकेष्वेव दृष्टिः पातनीया । एवं तामसिकश्रोतृगणाह्लादकान् विषयान् प्रकटयता तेष्वेव दृष्टिः सञ्चारणीया, इत्थं धर्मोपदेशकेन बलमधिगन्तुं शक्यते ।

व्याख्यानमारभमाणेन सशमं तत् प्रारब्धव्यम्, । समाप्तौ चौजोगुणेन साकं तामेव शैलीमनुसृत्य समापनीयं यत्कार्यसम्पादनाय व्याख्यानं प्रस्तुतम् । यथा प्रवाहनियमनायान्तरान्तरा तत्र वेगो निधीयते तथा धर्मोपदेशपूर्णां वचनधारां पूर्णफलप्रदां विधातुं व्याख्यानस्य च द्रढिमानमापादयितुमुपदेशकेनोद्घोषणादिभिरवसरा: श्रोतारः कौशलपूर्णया क्रियया समुत्साहनीया इति । सामयिकप्रहसनकथाख्यायिकाश्चात्रानुकूला इति। तत्साम्प्रदायिकसभासु च शिवदेवीरामकृष्णादिजयध्वनिं श्रोतृभिः कथयेत् । अथवा धर्मस्यैव जयध्वनिं कारयेत् । एभिरुपदेशकः श्रोतारश्च समुत्साहिता भवन्ति । कदाचिन्मञ्जुलरागरागिनीयुक्तैः स्तोत्रपठनैर्धर्मोत्साहवर्धकगीतिकाभिश्चोपदेशकश्रोतृशक्तिर्भूमानमाप्नोति । अत्रेदमवधेयं यद्‌यादृग्गुणरसभावाः प्रकाश्येरंस्तदनुकूलशक्तिमन्तः शब्दाः प्रयोक्तव्याः ।

वक्तरि कदाचित् केऽपि दोषा अपि सम्भाव्यन्ते, येषामपनयनाय सार्वहितचेतसा सदा यत्नो विधेयः । यथा देशकालरसभावानुकूलं हावभावमुद्राप्रदर्शनं श्रेयस्करं भवेत्, तथासमये तत्प्रदर्शनं चाञ्चल्यमङ्गानामधिकसञ्चालनं दम्भाहङ्कारव्यञ्जकभावप्रकाशनञ्च निष्प्रभं वक्तारं विदधते । न विधेयं क्वापि रससाङ्कर्यं वक्तृतासु यथा प्रकृतेः सत्त्वर-

स्तमांसि त्रयो गुणाः, यथा वा शरीरे वातपित्तकफास्त्रयो भावास्तथा साहित्येऽपि त्रयो गुणाः स्वीक्रियन्ते, माधुर्यौजःप्रसादा इति । ये ये रसा यद्गुणसम्बद्धास्तेषु तत्क्रमविकाशमधिगतेषु न भवति साङ्कर्यम् । असंबद्धा रसास्तथा प्रकाशिताः सङ्करतां प्राप्य धीरानपि श्रोतॄन् विचलितचित्तान् विदधते एव; रससङ्करभावस्तेषां क्लेशं जनयति । यथा (शुद्धशृङ्गारहास्यवात्सल्यादयः परस्परमविरुद्धाः करुणभयानकाद-यश्च तथा) परं हास्यवात्सल्याभ्यां वीरो रसो नितरामसदृशः । यदि रसभावुकेषु शान्तरसे समुन्मिषति हास्यव्यञ्जकशब्दप्रयोगेण हास्यर-समाविर्भावयति कश्चित्तदा कीदृशः क्लेशो रसभावुकैरनुभूयत इति प्रेक्षावद्भिरेव परीक्ष्यम् । सूक्ष्मभावानामेषां ज्ञानमवश्यं वक्तृभिरर्जनीयम् । व्याख्याने विषयसङ्करोऽपि न विधेयः । यो विषयो व्याख्यानेऽधिकृतो भवेत्तमेवावलम्ब्य व्याख्यानसमाप्तिः कर्तव्या । प्रसङ्गापतितं विषयान्तरं वर्णनीयञ्चेत्तदा तत् समाप्य स्वमूलभूतमेव विषयमधिकृत्य समाप्तव्यं व्याख्यानम् ।

---

इत्युपदेशपारिजाते उपदेशप्रणालीनिरूपणम् ।



# ...ायवु ...नता।

वर्णानां ब्राह्मणो गुरुः, वर्णाश्रमिणाञ्च संन्यासिनः, उभावप्येतौ शास्त्रतः प्राकृतिकनियमतश्च जनसमाजे धर्ममुपदेष्टुमर्हतः। अस्ति चाधिकारो ब्राह्मणानां वर्णाश्रमधर्मरक्षणाय समाजोन्नयनाय धर्माभ्युदयाय शिक्षाविस्ताराय प्रवृत्तिपथाधिकारसमुन्नतये च धर्मोपदेशस्य। तुरीयाश्रमिणः संन्यासिनः कर्मयोगप्रचाराय जीवानामाध्यात्मिकसमुन्नतये निवृत्तिपथाधिकारविस्ताराय च वेदैर्नियोजिताः। ब्राह्मणैः संन्यासिभिश्च धर्मोपदेशविज्ञानस्य सकला रहस्यनिवहा विज्ञेयाः।

संन्यासिना गृहस्थेनापि वा वक्त्रा सच्चरित्रेण भवितव्यमन्यथा तेषां वचनं न स्थायिफलं विधातुं शक्नोति। व्याकरणनिरुक्तशास्त्रैः सिद्धान्तितमेतत्, यदान्तरभावानां शब्दैरतिघनिष्ठसम्बन्धोऽस्तीति शक्तिशाली निपुणो वक्ता यद्यपि स्वव्याख्यानचातुरीतो वशितस्वान्तान् श्रोतॄन् विधत्ते परं यदि सच्चरित्रो भवेत्तदा तद्वचनेन श्रोतारोऽपि चरित्रवन्तो भवितुं शक्नुयुः, अन्यथा तद्वचनं वन्ध्या योषिदिव भवति। यथा वन्ध्यायोषिन्मुग्धदर्शनापि न फलाय कल्पते तथा वीतचरित्रस्योपदेशो न फलप्रदो भवति। प्रथममुपदेशकेनेत्थं प्रणिधेयं यन्मय्युपदेशयोग्यतास्ति नवेति। इदमुपदेशकर्म भगवतः। यतो मूढान् जीवानन्तर्जगद्भ्रमयंस्तेषां स्वरूपोन्मुखतासम्पादनं भगवतः कार्यम्, तत्सहायभूतमपि कर्म भगवत एव। धर्मोपदेशकानां कर्त्तव्यं कीदृशं गरीय इति न विस्मर्त्तव्यं कदाप्युपदेशकैः। दानधर्मस्त्रिविधो भवति अर्थदानं विद्यादानमभयदानञ्चेति। उत्तरोत्तरप्राधान्यादभयदानं सर्वश्रेष्ठम्। अभयदानश्रेणीषु धर्मोपदेशदानदीक्षादाने मूर्द्धन्यभूते। धर्मोपदेशकानां पदं कीदृशं महीय इत्यवधारणीयमजस्रं वक्तृभिः।

आचार्यो गुरुश्चेति द्वौ शब्दौ वेदेषूपलभ्येते । सम्प्रति प्रचलिताः श्रेष्ठा अधिकारा अनयोरेव सहायभूताः । आचार्यस्य गुरोश्च लक्षणमस्यैव ग्रन्थस्य धर्मप्रचारनामाध्याये साधारणतो निर्दिष्टम् । दीक्षादानयोग्यां गुरुपदप्राप्तिमभीप्सता जनेन विशिष्टा योग्यता सम्पादनीया । सर्वश्रेष्ठं गुरुपदमिति ख्यातम् । यावद्गुरुपदप्राप्त्यभिलाषुको जनः सर्वशास्त्रपारदृश्वा न भवति, मन्त्रहठलयराजयोगानां चतुर्णां लक्षणसाधनक्रमक्रियासिद्धांश्च रहस्यान् यावच्च विजानाति, यावन्मनुष्यपरीक्षणे तदधिकारनिर्णये च न यथार्थक्षमो भवति, यावच्च ब्रह्मोपासनाविज्ञानं सगुणपञ्चदेवोपासनारहस्यञ्च निष्कामतया बुद्ध्योपलब्धुं न क्षमते, यावच्च स स्वयं विषयविरक्तस्तपसि निरतो भक्तिमान् कर्मयोगी ज्ञानी वा न भवति, न तावदिमां गुर्वीमुपदेशकपदवीं लब्धुमीष्टे ; तावच्च जनैरन्यत्र कार्यसम्भारे विचार्य प्रवृत्तिर्विधेया । येन केनापि महोदयेन महतोऽस्य कार्यस्य धुरमाधातुमिच्छता पूर्वाभिहितविषये पूर्णज्ञानमर्जनीयम् । अथवा तेषां स्वरूपावधानायानिशं यत्नोऽनुष्ठेयो यथाशक्ति यथासम्भवम्* ।

अर्वाचीनानां पौराणिक-हरिकथकोपदेशकानां धर्मोपदेशशैली प्रत्नधर्माचार्याणामुपदेशरीतिः सहायिका । आचार्यस्य गुरोश्चाधिकारभेदो लक्षणैः पृथक् पृथक् प्रतिपादितः । आचार्यस्य यानि लक्षणानि समभिहितानि तत्र धर्मोपदेशकैरपि दृष्टिपातो विधेयः । वेदानां तत्सम्मतशास्त्राणाञ्च रहस्यावगमः, वर्तमानदेशकालोपयोगिज्ञाने कौशलम्, शास्त्रोक्तत्रिगुणत्रिभावानां रहस्यावबोधः, सप्तज्ञानभूम्यनुसारिदार्शनिकविज्ञानरहस्यज्ञानम्, पौराणिकत्रिविधभाषारहस्यमननम्, धर्मस्य तदङ्गोपाङ्गानाञ्च रहस्यज्ञानमेते गुणा आचार्यस्यावश्यकाः । अत्र धर्मोपदेशकाः पूर्णां योग्यतां लब्धुं शक्नुयुर्न वा

* ग्रन्थकर्तृसम्पादितासु मन्त्रयोगसंहिता-लययोगसंहिता-हठयोगसंहिता-राजयोगसंहितासु यथावद्वर्णितं तेषां सम्यग्ज्ञानं द्रष्टव्यम् ।

परमिमानेव विषयान् लक्ष्यीभूतान् विधाय यथाशक्ति तत्र ज्ञानार्जनम-वश्यं कर्तव्यम् । संन्यासाश्रमिणां महापुरुषाणां तथान्यसाम्प्रदायिकाचार्याणाञ्च व्यासासनमधिष्ठाय स्वमर्यादारक्षणपुरस्सरं सगाम्भीर्यं धर्मोपदेशनमुचितम् । अन्ये च धर्मवक्तारो यथादेशकालमुत्थाय धर्मव्याख्यानेन लोकोपकाराय प्रवर्तेरन् । श्रीमतो गुरुदेवस्य वचनं वेदवाक्यमिव प्रभुसम्मितम्, संन्यासिनामन्यसाम्प्रदायिकाचार्याणामुपदेशः पुराणादिशास्त्रोपदेश इव मित्रसम्मित एवमन्येषां धर्मवक्तॄणामुपदेशः काव्यशास्त्रोपदेश इव कान्तासम्मितः ।

धर्मस्वरूपं प्राक् सविस्तरं वर्णितम् । धर्माङ्गोपाङ्गानां साधारणरहस्यं सर्वविधधर्मवक्तृभिर्विज्ञेयम् । दानं तपः यज्ञश्चेति प्रधानतया धर्मस्य त्रीण्यङ्गानि ।

यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत् ।
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥
इतिश्रीगीतोपनिषत् ।

यज्ञस्यापि साधारणतस्त्रीण्यङ्गानि, यथा कर्मयज्ञ उपासनायज्ञो-ज्ञानयज्ञश्चेति । अतो वेदा अपि कर्मोपासनाज्ञानरूपेण काण्डत्रयेण विभक्ताः । यज्ञधर्मो धर्मान्तरात् प्रधानो व्यापकश्च । कर्मयज्ञः प्रथमं नित्यनैमित्तिककाम्यरूपेण पुनश्चाध्यात्माधिदैवाधिभूतरूपेण त्रिधा विभक्तः । उपासनायज्ञस्तु मन्त्रहठलयराजयोगैश्चतुर्विधः, स पुनःसगुणनिर्गुणभेदतो बहुप्रकारः, यस्य साधारण्येनेमाः पञ्च संख्या यथा ब्रह्मोपासना, सगुणपञ्चोपासना लीलाविग्रहावतारोपासना, ऋषिदेवपित्रुपासना, प्रेताद्युपासनेति । ज्ञानयज्ञोऽपि श्रवणमनननिदिध्यासनभेदेन त्रिविध एव । अमी त्रय एव साधारणतो भिन्नाः । यज्ञत्रयाणामवान्तरभेदा बहुविधा भवन्ति । त्रिगुणभेदतः सर्वे यज्ञास्त्रिविधाः । तपोधर्मस्तु कायिकवाचिकमानसिकभेदेन त्रिधा विभक्तः । पुनस्ते

त्रिगुणभेदतस्त्रिप्रकाराः । दानधर्मोऽपि अर्थदानविद्यादानाभयदान-भेदस्त्रिभेदात्मकः । भूमिधनकन्यारत्नाञ्चवस्त्रदानमर्थदानेऽन्तर्भवति । सर्वविधोऽसौ दानधर्मस्त्रिगुणभेदेन त्रिविधः । पुरुषधर्मे नारीधर्मेऽन्व-निर्णीनीयता स्फुटमेतद्विज्ञातुं शक्यते यद्यज्ञप्रधानः पुरुषधर्मो नारीधर्मश्च तपःप्रधानः । यज्ञमहायज्ञविषयेऽप्यदेव किमपि गूढं विज्ञानम् । * व्यष्टिजीवैः साधितो धर्मो यज्ञपदभाग्भवति, समष्टि-जीवकल्याणाय च विहितो धर्मः महायज्ञपदेन व्यवह्रियते । उप-रिनिर्दिष्टसन्दर्भतो धर्माङ्गरहस्यं किञ्चित्प्रकाश्यते । अमीषां धर्माणां सहायभूतानि साधनानि धर्मोपाङ्गनाम्नाभिधीयन्ते । एवं साङ्गोपाङ्गधर्म-लक्षणरहस्यं विज्ञाय धर्मं पुनरुद्धर्तुं यत्नपरेण वक्त्रा भवितव्यम् । †यथा यद्धर्माङ्गेन तदुपाङ्गेन च विज्ञातेन विज्ञातं स्याद् यत् सनातनधर्मस्य पारम्परिकज्योतिषा पृथिव्यां वर्तमाना धर्मसम्प्रदाया धर्ममार्गा धर्ममतानि च प्रकाशितानीति । किञ्चैतदपि विज्ञातम्भवेत् यत्स-नातनधर्माङ्गोपाङ्गानां छायात एवान्येषां धर्मा निर्णीताः ।

कामप्यभिनवां जातिमुद्धर्तुं नाधिको विचारोऽपेक्ष्यते । परमना-दिसिद्धामसंख्यसंस्कारयुक्तामिमामार्यजातिं पुनरुद्धर्तुं समधिको विचारो-ऽपेक्षितो भवेत् । प्रथममेतज्जातीया इत्थं प्रबोधयितव्या यद्यूयं पुरा कीदृशा आस्त, इदानीञ्च कीदृशाः संवृत्ताः, पुरा यूयं जगत्पूज्या अभवत, युष्माकम्पूर्वजाः कथं सर्वविधं ज्ञानज्योतिर्विकाशयामासुः । तथा मनुनोक्तम् ।

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥

---

* ग्रन्थकारप्रणीते, पञ्चमहायज्ञनामके ग्रन्थे द्रष्टव्यम् पञ्चमहायज्ञविज्ञानम् ।

† ग्रन्थकर्तृप्रणीतधर्मसुधाकरश्रीमधुसूदनसंहितादिग्रन्थानामालोचनेन सनात-नधर्मरहस्यमवगन्तुं शक्यते ।

पुरा युष्माकं महिमा जगति व्याप्तश्चासीत्; यावत्पूज्यचरणैर्महर्षिभिरियं भारतभूः पावनतमा सनाथासीत्, तावत् सम्यगैकमत्यमुपसम्पच्छान्त्यभ्युदयाधिकारिणोऽभवत, तिरोभूतेष्वेव पूज्यपादारविन्देषु महर्षिषु बौद्धयवनाभिभूत्या यूयं निष्प्रभाः संवृत्ताः; अधुनापि स्वावस्थां विचिन्तयत । अन्यच्च पश्यत यूयं सिंहाः, न मेषाः । एवंविधाभिर्वाग्भिरेषां पूर्वमहत्त्वं स्मारयित्वावसादमपनेतुं यतेत । जगत्पूज्येयमार्यजातिः कथं दासजातित्वं प्राप्तवती । पुरा यत्र भारते यावन्ति ज्ञानज्योतींषि प्रकाशितान्यभवन् तदद्याज्ञाननिकेतनायितम् । एवं पुरावृत्ततत्त्वं प्रबोध्यास्या आर्यजातेर्घोरतमोनिद्रापनयने यत्नोऽनुष्ठेयः ।

आर्यपुरुषाणां वर्णाश्रमधर्म एव धर्ममूलम् । आर्यनारीणाञ्च धर्ममूलं पातिव्रत्यव्रतरूपः सतीत्वधर्मः । पृथिव्यां प्रचलितेष्वन्येषु धर्ममतेषु केषुचिदपि नेमौ धर्मौ विद्येते । इयमेव सनातनधर्मस्यासाधारणी विभूतिः । प्रथमतोऽस्मिन् विषये स्थिरलक्ष्यं विधायोपदेशकार्ये प्रवृत्तिर्विधेया धर्मोपदेशकैः । आर्यजातौ यावदनयोः संस्कारयोर्दृढिमा विद्यते तावदेवेयं जातिरात्मनो जातित्वं रक्षितुमीष्टे । सततमार्यैरवधारणीयमेतद्येन तेषां आर्यसदाचारा मा लुप्येरन्, यथा च वर्णाश्रमनारीधर्माणां संस्कारः शैथिल्यं नापद्येत, यथात्रैषामन्तः ब्राह्मं क्षात्रञ्च तेजो न विलीयेत यथा च ब्राह्मतेजनिर्गमरूपो योगमृत्युः क्षात्रतेजनिर्गमरूपो युद्धमृत्युश्चातीवकीर्त्यभ्युदयनिःश्रेयसकरौ मृत्युसंस्कारौ मा विलयं गच्छेताम् । यथा च जगत्पावनतमनिष्कामव्रतपालनसंस्कारो मा नश्येत्, तेभ्यश्च सार्वजनीनत्वं सर्वधर्मावलम्बिषु करुणा मा दृष्टिपथमतीयात्, विषयविरक्तिः सर्वदेशकालपात्रेषु च समा दृष्टिर्नविलीयेत तथा वर्तितव्यं ।

यदा कापि मनुष्यजातिरधःपतति तदा तस्या दोषप्रियता वर्द्धते यदा चोन्नता भवति तदा तस्या गुणपक्षपातित्वशक्तिर्वर्द्धते । अथ-

नत्युन्मुखीं जातिं स्वार्थपरताधिकरोति, उन्नतिञ्च प्राप्नुवत्यां जातौ निष्कामव्रतप्रवृत्तिर्बहुभवति। यदा कापि जातिरधःपातमृच्छति तदा तस्याः शिल्पनैपुण्यकलाकौशलाध्यात्मिकी समुन्नतिर्विलयं याति, यदा चोन्नतिमधिगच्छति तदा सा वृद्ध्युपायकलक्षणायाः कलाशिल्पपदार्थविद्यायाः क्रमशो वृद्धिमाप्नोति। यदा च मनुष्यजातिरवनतावस्थां प्राप्नोति तदा तस्यामन्तर्जगद्वर्त्तिरूपा धर्मप्रवृत्तिर्दार्शनिकविज्ञानञ्चानावृतं भवति, परं या मनुष्यजातिरुन्नतेः परां काष्ठामनुसरति तदा तस्या धर्मप्रवृत्तिर्दार्शनिकज्ञानञ्चसन्निधत्ते। यदा कोऽपि मनुष्यसमाजोऽवनतिमनुभवति तदा तस्या नियमबद्धतानुशासनव्यवस्था च दूरे भवति। परं यः कोऽपि मनुष्यसमाजः समुन्नतोभवति तदा विषयान्तरैः सहैव तत्र नियमबद्धतानुशासनव्यवस्थायाः सम्बन्धो दृश्यते।

सर्वविधवक्तृभिर्धर्मोपदेशकैश्च मनुष्यजातेरवनतिकराण्युन्नतिकराणि च लक्षणानि विज्ञायोपदेशकार्ये प्रवृत्तिर्विधेया। सर्वदा च यतितव्यं येन स्वजातितोऽवनतिकलक्षणं दूरीभवतु, उन्नतिलक्षणञ्च प्रकाशताम्।

विद्या ज्ञानं प्रसूते। ययाऽविद्यापनीयते सा विद्या भवति। केवलं कलाकौशलशिल्पपदार्थविद्याशिक्षणेन विद्या नाधिगम्यते। व्याख्यानोपयोगिवाक्चातुर्यसम्पादनेनापि विद्या नाधिगता भवति। केवलं धनार्जनबुद्धिलाभेनापि विद्या नाप्यते। व्यूहयुद्धादिनैपुण्येन देशप्रतिदेशविलयेनापि विद्या न लब्धा भवति। केवलं व्याकरणकाव्यकोषादिषु दक्षताप्राप्त्यापि विद्या नाधिगम्यते। दार्शनिकयुक्तिकुशलतया सदम्भं वादितर्ज्जनसभाजयशक्तिविधानेनापि विद्या न प्राप्ता भवति। केवलं संस्कृतप्राकृतभाषासु लौकिकभाषासु वा योग्यतालाभेन विद्या नासाद्यते। राजसिकीं शिक्षामाप्योन्नतराजकीयाधिकारप्राप्तौ विद्या

नाधिगम्यते । इमानि किल शिल्पकलादीनां रूपान्तराण्येव भवितु-मर्हन्ति । अन्यदेव लक्षणं विद्यायाः । या खलु मनुष्यान्बाह्यजगतोऽन्त-र्जगन्नयति, या मनुष्यान् धार्मिकान् विधत्ते, या विषयलिप्सां विस्मार्य्य मानवान् भगवत्साक्षात्कारे नियोजयति, या विद्या मनुष्ये सात्त्विकगुणमुपचाय्य तत्रात्मज्ञानं विकाशयति, सैव यथार्थतो विद्या भवति । एतानि लक्षणान्यवधार्य्य धर्मवक्तार उपदेशे प्रवर्तेरन् ।

शिक्षाविषय इत्यमवधेयं यन्निखिलप्रजासु सार्वजनीना शिक्षा प्रचारणीया । पुरुषाः शैशव एव ब्रह्मचर्यं व्रतं पालयन्तो देशकालज्ञा धार्मिकाः सच्चरित्राः कार्यदक्षाः स्वदेशप्रेमभाविता वर्णाश्रमधर्मपक्ष-पातपरा निष्कामव्रतपालनपरायणाश्च यथा भवितुं शक्नुयुस्तथा शिक्षा-पेक्षिता । नारीधर्मस्य तपःप्रधानतया तास्वेवंविधैव शिक्षा प्रचारणीया यया सतीत्वधर्मो दृढमूलो भवेत्, ताश्च पूर्णतया स्वशरीरशुद्धिं विधाय सुगृहिण्यः सुमातरश्च भवितुं शक्नुयुः । सूत्रभूता विषया एत उपदेशकैः सम्यक् समवधेयाः ।

पृथिव्यां वर्तमानाः सर्व एव धर्माः सनातनधर्मस्यापत्यभूताः । यथा बहुपुत्रको भाग्यवान् जनको शिशून् यूनो ज्ञानिनोऽज्ञानान्मू-र्खान्पण्डितांश्च तनयान् योग्याधिकारं समर्प्यापि सममेव पितृस्नेहेन पश्यति, तथा समदर्शी सर्वभाग्यसम्पन्नः सर्वशक्तिमान् सर्वव्यापकोऽयं सनातनो धर्मो धर्मान्तराणामुपरि समामेव कृपां विधत्ते । यथा कुलरीत्यतिक्रमणेन कदाचिद्विनीयन्ते पुत्राः सामाजिकदण्डैः पित्रा, तथा सनातनधर्मेण बौद्धादयो धर्माः यथासमयमनुशासिताः । ईश्वर-भक्तिरुपासितकता आचाररूपा बाह्यशुद्धिः सनातनधर्मस्य कुलरीतिः । यत्र धर्ममार्गे उभे लक्षणेऽन्यतरद्वा न भवेत् स कुलरीतित्यागीत्य वैदिको मन्यते । सनातनधर्मस्य यथाद्वे कुलरीती तथा द्वे कुल-मर्यादेऽपि पुरुषेषु वर्णाश्रमधर्मः स्त्रीषु च सतीत्वधर्मः । यत्र

धर्मे नेमौ विषयौ स्यातां स सनातनधर्मः कुलमर्यादातिक्रामको ऽनार्य इति व्यपदिश्येत । कुलरीति कुलमर्यादापरेणाप्यन्यत्राप्यनुदार मनसा न भवितव्यमुपदेशकेन कदापि । स्वमतमण्डनेनैव परमतं खण्डितं भवति । परमतविध्वंसनप्रवृत्तितः स्वमतस्थापनपरा प्रवृत्तिः पुण्यजनिका । दार्शनिकमूलशून्यानि धर्मान्तराणि यथा विज्ञानसमुन्नत्या भीतानि भवन्ति, न तथा परमभ्रान्तदार्शनिकभित्तिमधिष्ठितः सनातनो धर्मः । जगति यावती ज्ञानविज्ञानसमुन्नति र्भविष्यति तावानेव जनसमाजः सनातनधर्मपरो भवेत् । तस्मादिमान्युपदेशकैरवधेयानि ।

वर्णाश्रमराजदण्डसमाजदण्डाचार्यानुशासननियमानामभ्युदयकराणामेषां यथावत्पालनेन मानवसमाजः क्रमशः समुन्नतो भवति । नियमपालनमेव मनुष्यस्याखिलानामुन्नतीनां मूलम् । इयमेव नियमबद्धप्रणालीत्युच्यते । अत्र नियमबद्धतैव कारणं यत् सृष्टिस्थितिलयकर्म यथायथं निर्वहति । नियमबद्धतानिमित्तमेवाद्यन्तशून्ये गगने सूर्यनक्षत्रराशिग्रहोपग्रहधूमकेतवोऽनन्तालोका भ्रमन्ति, परं नैकोऽन्येन संघट्टमासाद्य विनाशयति सृष्टिक्रियाम् । या जातिर्नियमं पालयितुं विजानाति, यज्जातीयमनुष्यो कुलसमाजराजवेदनियमान् पालयति यथावत् सैव मनुष्यजातिरुन्नतिं प्राप्नोति । यथा नियमबद्धताखिलानामुन्नतीनां मूलं, तथानुशासनव्यवस्थापालनमपि शक्तिलाभाय कल्पते । न हि शक्तिमन्तरा किमपि कार्यं साधयितुं कोऽपि प्रभवति । समाजराजार्यलोकधर्मशक्तयोऽनुशासनव्यवस्थयैव प्राप्यन्ते । कस्या अपि जातेर्जातीयमुन्नतिरवनतिश्चानुशासनव्यवस्थाया न्यूनाधिक्यतो भवतः । अधुनेयमार्यजातिर्वीतानुशासनव्यवस्था संवृत्तेति दिनाद्दिनमवनतिमनुभवति * । आपरमाणु आव विराड्ब्रह्माण्डात् सर्वमेवैकमन्येनाक्रष्टं

* ग्रन्थकर्तृप्रणीतं श्रीभारतधर्ममहामण्डलरहस्यनामकं पुस्तकमवलोकनीयम् । यत्र वैज्ञानिकविचारेण सिद्धान्तितं यत् कीदृशी आर्यजातेरधुनातनी दशा । अस्योन्नत्यै कीदृशी अनुशासनव्यवस्थापेक्ष्यते इति ।

सत साहाय्यमाप्नोति, न हि कोऽप्यस्य ब्रह्माण्डस्य विभागो नश्यति उपेक्ष्यते वा। इदमेव प्राकृतिक्यनुशासनव्यवस्था प्रोच्यते। एतद्दृष्टान्तमूलमेवापरं दार्ष्टान्तिकमप्यवगन्तव्यम्। यावत् समाजे ब्राह्मणक्षत्रियविट्शूद्राः स्त्रीपुरुषौ ब्रह्मचारी गृहस्थवानप्रस्थसंन्यासिनः राजा प्रजाचेति यथाक्रममेषामेकोऽपरं पालयितुं प्रभवति, तदैवात्रानुशासनव्यवस्था द्रढिमानं प्राप्स्यति, न हि कोऽपि कमपि समुपेक्षेत सर्व एव स्वकर्तव्यं सम्पादयन्तः समाजाङ्गाङ्गिरूपेणान्योन्यं कल्याणमभिलषन्तः कर्मधारायां प्रवाहिता अग्रेगन्तुं पारयेयुः।

नियमबद्धानुशासनव्यवस्थां विना न कापि मनुष्यजातिर्जीवितुं पारयति न वा स्थायिसमुन्नतिमधिगच्छति। अतः सर्वैर्धर्मोपदेशकैर्धर्मसमाजपरिवारसंश्लिष्टां नियमबद्धामनुशासनव्यवस्थाञ्च द्रढयितुं यत्नोऽनुष्ठेयः।

सनातनधर्मस्य सर्वजीवहितकारित्वमहत्त्वयोः पूर्णतासम्पादने लक्ष्यं धेयं, कस्यामपि दशायां सनातनधर्मस्य जनकत्वं न विस्मर्तव्यम्। सनातनधर्मस्य मूलरूपौ वर्णाश्रमधर्मसतीत्वधर्मावगन्तव्यौ। सर्वे सम्प्रदायाः स्वाङ्गभूता मन्तव्याः। पितृरूपेण कालस्य मातृभावेन च देशस्य सेवनपूजने विधातव्ये। अन्योन्यं विरोधमपहाय भ्रातृभावेन वर्तितव्यम्। जात्याश्रमलिङ्गधर्माचारपदज्ञानाधिकारान् केवलमधिकारविशेषत्वेन विज्ञाय कर्तव्यकर्मणि दृढमनोभिः सर्वैर्भवितव्यम्। सार्वजनिकशिक्षायां धार्मिकशिक्षायाञ्च समाजः प्रवर्त्येत। विद्याया लुप्तो भागः संग्राह्यः। त्रिभावत्रिगुणकर्मपञ्चमहायज्ञविज्ञानयोगचतुष्टयसाधनसात्त्विकदानधर्मसंस्कारादीनां यथावत्प्रवर्तनेनार्यजात्याभ्युदयाय यतितव्यम्। श्रीभगवदुक्तगीतोपनिषदीयाज्ञानुरूपमनुष्ठातुमनुष्ठापयितुञ्च यत्नः सम्यग्विधेयः।

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥१॥**

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति॥ २॥
न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥ ३॥
नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः।
शरीरयात्रापि च ते न प्रसिध्येदकर्मणः॥ ४॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः।
लोकसंग्रहमेवापि सम्पश्यन् कर्तुमर्हसि॥ ५॥
यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते॥ ६॥
सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत।
कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम्॥ ७॥
यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः॥ ८॥
त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः।
कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः॥ ९॥
काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः॥ १०॥
त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः।
यज्ञदानतपः कर्म न त्याज्यमिति चापरे॥ ११॥
एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।
कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम्॥ १२॥

नियतस्य तु संन्यासः कर्मणो नोपपद्यते।
मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ १३ ॥
दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत्।
स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ॥ १४ ॥
कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन।
सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्विको मतः ॥ १५ ॥
संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते ॥ १६ ॥
ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १७ ॥
कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥ १८ ॥

---

इति उपदेशपारिजाते कार्य्यकुशलतावर्णनम्।

समाप्तोऽयं ग्रन्थः।

ॐ शान्तिः। शान्तिः। शान्तिः॥

**SRI**

# Vishwanath Annapurna Dan Bhandar

Is a charitable relief fund registered under Act XXI of 1860 under the auspices of the Sri Bharat Dharma Mahamandal its Head Office has been established in Benares. The aims and objects of the institution are to render help, as far as possible, to the destitute who may happen to be in the sacred city of Benares, to the widows, orphans, sick and helpless people without distinction of caste creed, nationality and religion.

Contributions are invited from the charitable inclined men and women of all countries, and even the smallest amount received is thankfully acknowledged in the organs of Sri Bharat Dharma Mahamandal which are published separately in almost all the languages of India. A statement of accounts of this fund is annually published and supplied to all its principal supporters.

Remittances should be made to,

THE SECRETARY.
SRI VISHWANATH ANNAPURNA DANBHANDAR
C/o SRI MAHAMANDAL HEAD OFFICE,
*Benares City, INDIA.*

